Size of the leaves :—9.75″ × 4.1″.

No. of lines in each folio :—9.

No. of letters in each line :—24.

Material :—country paper, somewhat musty in appearance.

Style of its handwriting :—bold, clear and legible.

Nature and condition of the MS :—fragmentary, moth-eaten.

Script :—Devanāgarī.

Lacunae :—folios : 1-52, 62, 67-73, 82-93, 98 and 99 ( in all 22 ), are missing.

Remarks :—folios 56-63 moth-eaten ; portion of the text being thus lost ; occasional use of *pṛṣṭhamātrās* ; borders ruled with double black lines ; numbers of leaves and verses marked out with red pigment, so also the colophons of chapters ; subject headings marked out with red pigment. This is the same MS. referred to by Aufrecht ( I.494[a] ). There is much similarity between this MS and MS B. Even some mistakes are also common. Some of them are corrected by some later hand.

Scribal peculiarities :—Occasionally पृष्ठमात्रा employed, thus *e.g.* दे is written as ।दे. क्ष् and ठ are written as ख्य् and ट् respectively. Typical manner in which other conjuncts are written is difficult to illustrate due to want of such letters in the press.

Beginning :—भगणे गुरुरेव स्यात्. . . .etc. ( IV.145 ).

End :—इति श्रीमन्नाट्यशास्त्रे श्रीकंठकविविरचितायां रसकौमुद्यामुत्तरखण्डे राजनीतिवर्णनाध्यायो दशमः ॥
संवत् १६५२ वर्षे आषाढ शुदि ४ सोमे ल( लि )षि( खि )तं( तम् ) ।
यादृशं पुस्तके द्रष्टा( दृष्टं ) तादृसं( शं ) लषिते( लिखितं ) मया:( या ) ।
मम शुध( द्ध )मशुधं( द्ध ) वा:( वा ) मम दोषो न दीयते( ताम् ) ॥ १ ॥
श्रीरस्तु कल्याणमस्तु:( स्तु ) ॥

॥ श्रीः ॥

# रसकौमुदी

## विषयानुक्रमणिका

**प्रथमोऽध्यायः-**

श्लोक

## चतुर्थोऽध्यायः—

## उत्तरार्धम्

**षष्ठोऽध्यायः—**



**सप्तमोऽध्यायः—**



**अष्टमोऽध्यायः—**



**नवमोऽध्यायः—**

॥ श्रीः ॥

# ॥ रसकौमुदी ॥

## ॥ प्रथमोऽध्यायः ॥

[ 1[b] ] श्रीमल्लक्ष्मीनारायणाय नमः ॥

श्रीमच्चोलद्युतिचयचमत्कारभास्वद्विभूषां
स्फूर्जद्रागां मदनविबुधप्रस्फुरद्रङ्गरक्ताम् ।
दृष्ट्वा राधां तपनतनयातीरवानीरकुञ्जे
भूरि प्रेम्णा मुदितहृदयः पातु नः पीतवासाः ॥ १ ॥

यस्य श्रीपरमेश्वरस्य कृपया मूकोऽपि वाचं परां
पङ्गुः पर्वतलङ्घने किल महासामर्थ्यमेति क्षणात् ।
जन्मान्धोऽप्यरविन्दसुन्दरदृशोर्द्वन्द्वं किमन्यत्परं
वन्दे नन्दकिशोरमिन्दुवदनं तं भक्तचिन्तामणिम् ॥ २ ॥

गेयं गन्धर्वविद्याधरसुरनिकरैर्ध्येयमन्तः प्रमोदै-
र्नित्यं योगीश्वराद्यैर्युवतिनिवहहृत्पङ्कजैः पेयमुच्चैः ।
सर्वानन्दप्रकाशं कुसुमशरकलाकेलिरङ्गप्रदीपं
नादब्रह्म प्रणौमि प्रतिदिवसमहं भूतये भूतिदं तत् ॥ ३ ॥

ख्यातोदीच्यकुलेऽभवद्गुणनिधिर्विप्रोत्तमो **मङ्गलः**
श्रीमद्विष्णुपदारविन्दयुगले भक्तस्तदीयात्मजः ।
काव्यं काव्यकलाकलापकुशलः **श्रीकण्ठ**नामा कविः
कुर्वेऽहं रसकौमुदीति निपुणः सङ्गीतसाहित्ययोः ॥ ४ ॥

---

1[b]. N. रागान्मदन—

2[a]. N. वाचां 2[c]. N. दृशोद्वन्द्वं. 2[d]. N. भक्तिचिन्ता-

3[b]. NA. युवतिजनमनः- 3[d]. N. भूतदं corrected in the marginalia

4[a]. N. दिव्यकुले; B. दीव्यकुले 4[b]. N. भक्तस्य दीपात्मजः 4[d]. A. निपुणः, B. Missing N. निपुणां

द्वारावत्याः समीपे **नवनगरपुरे** क्ष्मापतिः पूर्वभागे
**जामश्रीशत्रुशल्यः** सकलज [ 2a ]नमनोरञ्जकः पुण्यराशिः ।
**श्रीकण्ठ**स्तत्सभायां कविरमलमतिर्विद्यते विप्रवर्य—
स्तेन प्रौढप्रमेयव्यतिकरसुभगं रच्यते काव्यमेतत् ॥ ५ ॥

यद्यस्ति चित्तं सरसं रसज्ञाः सङ्गीतसाहित्यकलाकलापे ।
नरेन्द्रनीतौ च तदा मदीया विलोकनीया रसकौमुदीयम् ॥ ६ ॥

सङ्गीतसाहित्यमिति प्रयोगं प्रयोगविज्ञाः प्रवदन्ति नित्यम् ।
तथाविधा नो कथयन्ति मिथ्या सङ्गीतमाहात्म्यमतोऽधिकं स्यात् ॥ ७ ॥

साहित्यात् किल भाति भूरि महिमा सङ्गीतमध्ये यतः
साहित्ये निपुणा अपि प्रतिवचो वाक्यं वदन्तीदृशन् ।
सर्वप्राणिसुखावहो रतिरसः सङ्गीतसाहित्ययो-
रित्युच्चारणतारतम्यमनयोर्ध्येयं क्रमात् पण्डितैः ॥ ८ ॥

सङ्गीतं प्रथमं तस्मात् पूर्वखण्डे निगद्यते ।
साहित्यमुत्तरे खण्डे ग्रन्थस्यास्य क्रमो मतः ॥ ९ ॥

गुरोः **श्रीरूपदेवस्य पूर्णानन्दकवेः** पुनः ।
प्रणम्य चरणाम्भोजं मयैषा क्रियते मुदा ॥ १० ॥

श्रीम**ल्लक्ष्मीश-लोकेश-शक्ति-शङ्कर-नारदाः ।**
**मतङ्गः कोहलो रम्भा भरतः कश्यपोऽर्जुनः** ॥ ११ ॥

**वायुर्विश्वावसुर्वायुनन्दनो रुद्रनन्दनः ।**
आचार्या बहवोऽन्येऽपि [ 2b ] सङ्गीतार्णवपारगाः ॥ १२ ॥

नत्वा तेषां पदाम्भोजं मतं चालोक्य तत्त्वतः ।
रसिकानां विनोदार्थं मयाऽसौ कथ्यतेऽधुना ॥ १३ ॥

5a. N. द्वारावत्या; नवनर-5c. N. कविरलमतिः Corrected in the marginalia in pencil. 5d. N प्रेढ corrected in the text in different ink.
8d. N. इत्युच्चारण; कृपापण्डितैः
10a. N. श्रीरुपदेशस्य, 10d. N. कथ्यते
11c. B. मतंगं, 11c. N. कोहलारंभ
13b. B. ततः; AN. तत्त्वतः

गीतवादित्रनृत्यानां सङ्गः सङ्गीतमुच्यते ।
मार्गदेशीविभेदेन द्विधा तत्कथितं बुधैः ॥ १४ ॥

ब्रह्मादिभिर्यदुद्दिष्टं प्रयुक्तं **भरतादिभिः** ।
पुरतः पार्वतीभर्तुर्मुक्तिदं मार्गसञ्ज्ञकम् ॥ १५ ॥

जनानां प्रतिदेशं यन्मनोरञ्जनकारकम् ।
देशीति कथ्यते सर्वैराचार्यै**र्भरतादिभिः** ॥ १६ ॥

नृत्यं वाद्यानुवर्ति स्याद्वाद्यं गीतानुगं भवेत् ।
प्रधानत्वादतो गीतमत्रादावभिधीयते ॥ १७ ॥

जग्राह प्रथमं गीतं सामवेदात् पितामहः ।
सुरासुरनरादीनां सर्वेषां श्रेयसे ध्रुवम् ॥ १८ ॥

रराज वेणुध्वनिना रमेशो गीतेन देवो मुदमेति शम्भुः ।
रतो विरञ्चिः किल सामगीतौ सक्ता सरस्वत्यपि वीणिकायाम् ॥ १९ ॥

अन्ये च विद्याधरकिन्नराः सुरा गन्धर्वसिद्धप्रमथादयो नराः ।
निपीय तद्गीतसुधारसं बुधा मुहुर्मुहुर्भूरिरसं प्रपेदिरे ॥ २० ॥

गीतं वाद्यं तथा नृत्यं चतुर्वर्गफलप्रदम् ।
तस्मादिदं त्रयं धीरः साधयेद्विष्णुतत्परः ॥ २१ ॥

अध्यायैर्दशभि[ 3ᵃ ]र्विभूषिततनुः खण्डद्वयेनोज्ज्वला
स्वच्छन्दं रसकौमुदी विजयते विद्वन्मनोरञ्जिनी ।
अध्यायैः किल पञ्चभिर्विरचितं तत्राद्यखण्डं परं
खण्डं पञ्चभिरेव नव्यरचनासाहित्यसन्दीपकम् ॥ २२ ॥

15ᵈ. N. संज्ञितम्
16ᶜᵈ. N. सर्वैः राचार्यैः
17ᵃ. N. वाद्यानुगं वर्ति; 17ᵃ. N. प्रधानत्वादृतो 17ᵈ. B. निधीयते
19ᵃ. N. ध्वनिता
21ᶜ. N. धीराः; 21ᵈ. N. तत्पराः
22ᵃ. N. बिभूषितवपुः; B. उज्वला 22ᵇ. ABN स्वछन्दं; AN. रंजनी

अध्याये प्रथमे तत्र चक्राणि नादसम्भवः ।
स्थानानि श्रुतयः शुद्धाः स्वराः सप्त विकारजाः ॥ २३ ॥

वाद्यादिभेदाश्चत्वारो ग्रामौ तद्गतमूर्छनाः ।
शुद्धकूटाभिधास्तानाः प्रस्तारः सह सङ्ख्यया ॥ २४ ॥

नष्टोद्दिष्टौ ग्रहाद्याश्च वर्णाऽलङ्कारसङ्ग्रहः ।
वर्ण्यन्ते क्रमशश्चैते गीतशास्त्रप्रमाणतः ॥ २५ ॥

**॥ इति वस्तुसङ्ग्रहः ॥**

आहतोऽनाहतश्चेति नादो हि द्विविधो मतः ।
पिण्डे प्रकाश्यते योऽस्मिन्नुपयोगी स उच्यते ॥ २६ ॥

गुदे चतुर्दलं चक्रमाधाराख्यं प्रतिष्ठितम् ।
तदूर्ध्वं लिङ्गमूले स्याच्चाधिष्ठानं तु षड्दलम् ॥ २७ ॥

मणिपूराभिधं नाभौ शोभितं दशभिर्दलैः ।
अनाहतं हृदि प्रोक्तं दलैर्द्वादशभिर्युतम् ॥ २८ ॥

षोडशारं विशुद्धाख्यं कण्ठे तु भारतीस्थलम् ।
घण्टिकायां महाचक्रं ललनाख्यं विराजते ॥ २९ ॥

पत्रैर्द्वादशभिर्युक्तं सुखदुःखस्य कारणम् ।
आज्ञाभिधं भ्रुवोर्मध्ये त्रि [ 3[b] ] दलं चक्रमुच्यते ॥ ३० ॥

मनश्चक्रं ततोऽप्यस्ति षड्दलं सुखहेतुकम् ।
षोडशारं तदूर्ध्वं तु सोमचक्रं विदुर्बुधाः ॥ ३१ ॥

---

23[a]. N. अध्यायैः
24[c]. N. स्थानाः
25[d]. N. गीतस्यास्य
26[c]. N. सोस्मिन्
27[c]. N. तदूर्ध्वे—27 N. षट्दलम्
28[b]. B. दशभिः र्दलैः
30[c]. ABN. भ्रूवो-
31[b]. B. हेतुकम्

सुधाधरं ब्रह्मरन्ध्रे चक्रं सहस्रपत्रकम्।
अभिवर्धयते देहं तत्सुधाधारया भृशम्॥ ३२॥

भारत्याः कण्ठदेशे स्थलमतिललितं षोडशारं विशुद्धं
तस्मिन् सप्तस्वराः स्युः सकलजनमनोरञ्जकाः षड्जमुख्याः।
चक्रं तु ब्रह्मरन्ध्रे स्फुरति किल सहस्रारमेकं सुधाढ्यं
नृणां जीवस्तदीयप्रथमदलगतो गीतसिद्धिं तनोति॥ ३३॥

आत्मा मनो, मनो वह्निं, वह्निः प्रेरयति क्रमात्।
मारुतं, मारुतो ब्रह्मग्रन्थिस्थोर्ध्वपथे चरन्॥ ३४॥

प्रणवो नादरूपः स्यात्तत्र ब्रह्मादयः सुराः।
नाभिस्थानगतः साक्षाद्ब्रह्मग्रन्थिरिति स्मृतः॥ ३५॥

अतिसूक्ष्मं पुरा नाभौ हृदि सूक्ष्मं ततः परम्।
गले पुष्टमपुष्टं तु शीर्षे वक्त्रे च कृत्रिमम्॥ ३६॥

इति पञ्चाभिधं नूनमाविर्भावयति ध्वनिम्।
नादोऽयं नदतेर्धातोरसौ पञ्चविधः स्मृतः॥ ३७॥

नादाद्बिन्दुसमुत्पत्तिर्नादो गीर्देवताधनम्।
तस्माद्वेदाश्च शास्त्राणि सम्भवन्ति जगत्त्रये॥ ३८॥

स त्रेधा व्यवहारे तु हृदि मन्द्रो, गले ततः।
मध्यः, शिरसि तारोऽथ द्विगुणः क्रम [4a] शो भवेत्॥ ३९॥

---

32b. N. सहस्र
33a. N. भारत्या; 33d. N. तदीयं; after 33d. N. शारीरे
34b. BN. वह्नि; B. प्रिरयति; 34c. N. मारुतो मारुतो.
35c. N. नाभिस्थातः स्याद्ब्रह्म-
36d. N. चक्रे
37b B. -भावियति
38c. N. शास्त्राणी; 38d. BN. समवन्ति जगत्त्रये
39c. N मध्ये......तारो द्वि-

एवं विग्रहवीणायां दारुमय्यां विपर्ययः ।
हृदूर्ध्वस्थसुषुम्णायां तिर्यङ् नाड्योऽनिलाहताः ॥
द्वाविंशतिः क्रमात्तीक्ष्णा नयन्ति श्रुतितां ध्वनिम् ॥ ४० ॥

'श्रु श्रवणे' चास्य धातोः क्तिप्रत्यये सुसंगते ।
श्रुतिशब्दः प्रसाध्योऽयं शब्दज्ञैर्भावसाधने ॥ ४१ ॥

श्रुतीर्द्वाविंशतिं **केचित्** षट्षष्टिं मेनिरेऽ**परे**।
आसामानन्त्य**मन्ये** तु सम्यक् द्वाविंशतिर्मतम् ॥ ४२ ॥

तीव्रा कुमुद्वती मन्दा छन्दोवत्यपि षड्जगाः ।
दयावती रञ्जिनी च रक्तिका ऋषभाश्रिताः ॥ ४३ ॥

रौद्री क्रोधा तु गान्धारे वज्रिका च प्रसारिणी ।
प्रीतिश्च मार्जनी चैव श्रुतयो मध्यमाश्रिताः ॥ ४४ ॥

क्षिती रक्ता च सन्दीपिन्यालापिन्यथ पञ्चमे ।
मदन्ती रोहिणी रम्या धैवतस्वरसंश्रयाः ॥
उग्रा च क्षोभिणी धीरैर्निषादे परिकीर्तिते ॥ ४५ ॥

नो दृश्यते यथा मार्गो मीनानां जलचारिणाम् ।
यथा व्योम्नि विहङ्गानां तथा स्वरगता श्रुतिः ॥ ४६ ॥

## ॥ इति श्रुतिविवेकः ॥

श्रुतिभ्यः क्रमशः षड्जर्षभगान्धारमध्यमाः ।
पञ्चमो धैवतश्चाथ निषादः सप्त ते स्वराः ॥ ४७ ॥

40[a]. N. हृदूर्ध्व- 40[b]. AB तिर्यग्गा-. N. तिर्यङ्; B. अनिभाहताः 40[c]. B क्रमा 40[d]. N धर्नि, corrected in pencil ( interlinear )
42[c]. N द्राविंशति केचि 42[d]. N. षट्षष्टिं तमे
43[c]. N. रंजनी ; 43[d]. N. रुषभाश्रिताः
44[a]. B. राद्री क्रोधा नु 44[b]. N. प्रसादिनी
45[f]. BN. –कीर्तिता
46[a]. N. दृश्यतं, B. मार्गौ ; 46[b]. B. माननां दृश्यचारिणाम्
47[a]. N. स्युः क्रमात्; 47[d]. N. निषदः B. श्वराः

षड्जादीनां सरिगमपधनीत्यपराऽभिधा ।
ते मन्द्रादिविभेदेन प्रत्येकं त्रिविधा मताः ॥ ४८ ॥

मयूरश्चातक [ $4^b$ ] श्छाजः क्रौञ्चः कोकिलदर्दुरौ ।
मातङ्गः सप्त षड्जादीन् वदन्ति क्रमशः स्वरान् ॥ ४९ ॥

स्वोपान्त्यश्रुतिसंस्थास्ते षड्जमध्यमपञ्चमाः ।
**भरतादिभि**राचार्यैः कृतपूर्वाभिधा मताः ॥ ५० ॥

साधारणाभिधां गच्छेद्गो माऽऽद्यश्रुतिगो यदि ।
अन्तराख्यां ततो याति द्वितीयश्रुतिसंस्थितः ॥ ५१ ॥

षड्जस्याद्यश्रुतिगतो निषादः कैशिकी मतः ।
वर्तमानो द्वितीयायां काकली स निगद्यते ॥ ५२ ॥

स्वरास्ते मिलिताः सर्वे चतुर्दश भवन्त्यमी ।
**गुरवो** मेनिरे सप्त विकृतान् द्वादशाऽ**परे** ॥ ५३ ॥

साद्याश्चतुर्विधास्ते तु वादिसंवादिनौ तथा ।
विवादी चानुवादीति वदन्ति **भरतादयः** ॥ ५४ ॥

प्रयोगे बहुलो यस्तु स वादी गदितो बुधैः ।
श्रुतयोऽष्टौ ययोरन्तर्भवेयुर्द्वादशाऽथवा ॥ ५५ ॥

संवादिनौ स्वरौ ज्ञेयौ न निमौ तु परस्परम् ।
एकयाऽन्तरितौ श्रुत्या मिथः स्वरौ विवादिनौ ॥
अन्येऽनुवादिनः शेषाः स्वरा यथार्थसंज्ञकाः ॥ ५६ ॥

---

$49^a$. N. चाषः in pencial in marginalia; $49^b$. BN. दुर्दरौ
$49^d$. B. श्वरान्
$50^d$. A. चुतपूर्वा–B. श्कृतपूर्वा–N –र्यै श्रुतपूर्वा–
$51^a$. N. साधारभिणा–
$52^b$. N. कौशिकी
$55^c$. B. ययौ; $55^d$. B. भवेयुः द्वा–
$56^a$. N. संबादितौ; $56^c$.B. अन्ये तु, $56^d$. N. –संज्ञिकाः

ग्रामः स्यात्स्वरसन्दोहो मूर्छनादिभिराश्रितः ।
षड्जमध्यमगान्धारभेदेन त्रिविधो मतः ॥ ५७ ॥

स्वर्गे भवति गान्धारः पृथिव्यां षड्जमध्यमौ ।
षड्जमध्यमयोस्तस्माल्लक्षणं स्फुटमुच्यते ॥ ५८ ॥

स्वीयतुर्यश्रुतिं प्राप्ते षड्जग्रामस्तु प[ 5[a] ]ञ्चमे ।
स्वोपान्त्यश्रुतिमापन्ने पञ्चमे मध्यमो भवेत् ॥ ५९ ॥

पृथिव्या जायते षड्जो भुवर्लोकात्तु मध्यमः ।
गीर्वाणलोकाद्गान्धारः स्थानत्रयमुदाहृतम् ॥ ६० ॥

षड्जमध्यमयोर्मध्ये षड्जस्य मुख्यता भवेत् ।
आद्यत्वादविलोपित्वाद्यथार्थवचनान्**मुनेः** ॥ ६१ ॥

षड्जमध्यमजातानां मूर्छनानां परस्परम् ।
किञ्चिद्विशेषादेकत्वमुक्तवान् **दन्तिलः** स्फुटम् ॥ ६२ ॥

तस्मान्न मेनिरे ग्रामं मध्यमं **गुरवो मम** ॥ ६३ ॥

सप्तस्वराणामारोहोऽवरोहः क्रमशो यदि ।
तदा **मुनिमतङ्गा**द्यैर्मूर्छनेत्यभिधीयते ॥ ६४ ॥

मूर्छा मोहे समूहे स्यान्निष्पत्तिर्मूर्छनापदे ।
येनैव मूर्छते रागो मूर्छनेत्यभिशब्दिता ॥ ६५ ॥

मध्यसप्तकसंस्थेन षड्जेनारभ्यतेऽग्रिमा ।
अधोगतैर्निषादाद्यैर्मूर्छनाः षट् परा मताः ॥ ६६ ॥

---

57[a]. N. स्याश्वर–57[cd]. and 58[ab] missing in B.
58[c]. N. तस्मात्
59[a]. N. स्तीर्यश्रुति
60[b]. B. भुवर्ल्लोका—; B. मध्यमा, A मध्यमः ; N. मध्यमः 60[c]. N. वाणलोकात्तु
61[c] B. अद्य; N आद्यवा– 61[d]. N. वसना–
63[c]. N. मेरे; 63[d]. B. गुरुवो
64[a] आरोहे
65[a]. A. मोहे समुच्छ्राये ; B. मोहे-समृहे 65[c] A. मूर्छ्र्यते
66[b]. N. सेग्रिमा 66[c]. N. अध्यागतै॰ 66[d]. B. मूर्छना षद्यरा

षड्जे तूत्तरमन्द्राऽऽद्या रजनी चोत्तरायता ।
शुद्धषड्जा मत्सरीकृदश्वकान्ताऽभिरुद्गता ॥ ६७ ॥

मूर्छना चतुर्विधा पूर्णा षाडवोडविता तथा ।
साधारणीति विख्याता **मतङ्गादिमुनीश्वरैः** ॥ ६८ ॥

सा पूर्णा तत्र विज्ञेया गीयते सप्तभिः स्वरैः ।
या गीयते स्वरैः षड्भिः षाडवां तां प्रचक्षते ॥ ६९ ॥

उडविता तथा ख्याता पञ्चभिर्गीयते स्वरैः ।
काकल्यन्तरसंयुक्ता ज्ञेया साधारणीति सा ॥ ७० ॥

यस्यां यावतिथौ षड्जमध्यमौ मूर्छनाक्रमे ।
मूर्छना तावतिथ्येव ग्रामयोः परिकीर्तिता ॥ ७१ ॥

यदैव मूर्छनाः शुद्धाः षाडवोडवितीकृताः ।
तदा ताः शुद्धतानाः स्युः सर्वरागेषु संमताः ॥ ७२ ॥

असम्पूर्णाश्च सम्पूर्णा व्युत्क्रमोच्चारितस्वराः ।
मूर्छनाः कूटतानाः स्युरिति संगीतनिर्णयः ॥ ७३ ॥

**इति शुद्धकूटतानाः ॥**

क्रमं यथोक्तं कृत्वादौ पूर्वः पूर्वः परादधः ।
स्थाप्यः स्वरः स चेदग्रे तत्पूर्वस्तदधो भवेत् ॥ ७४ ॥

पुरतो विलिखेत्प्राज्ञः स्वरानुपरिसंस्थितान् ।
मूलक्रमक्रमेणैव पृष्ठे शेषान् स्वरानिह ॥ ७५ ॥

---

67[b]. N. -रायताः 67[cd] B. कृताथाश्वक्रां- N. कृनाथाश्व. 67[d]. N. भिहद्गता.
68[b]. B. षाडवौड- 68[c]. AB. साधारिणी
70[a]. N. अडविता; 70[b]. B. गायते; 70[d]. B. साधारिणी
72[b]. A. षाडवौड, B. षाड्जवौड A.-विनीकृताः
72[d].-73[c]. missing in N; folio 8 is also missing.
73[b]. B. व्युत्कमो, 73[d]. B. संगीति-
74[b]. A. पूर्वपूर्वः; B. परादयः
75[a]. B. विलखेत्

मतङ्गादिभिराचार्यैः प्रस्तार इति दर्शितः ।

## इति प्रस्तारः ॥

एकादिसप्तपर्यन्तानङ्कानादौ लिखेद् बुधः ।
तेषु पूर्वेण पूर्वेण हते सति परे परे ॥ ७६ ॥

एकस्वरादितानानां क्रमात्सङ्ख्या भवेदिति ॥ ७७ ॥

## इति सङ्ख्या ॥

मूर्छनान्त्यस्वरस्थाङ्कान् प्रश्नोत्थाङ्कैर्निपातयेत् ।
यथार्हं हननं प्राप्तैः प्राक्स्वराङ्कैर्यथाक्रमम् ॥ ७८ ॥

शेषान् येनाहतिर्याता स्वरस्तावतिथो भवेत् ।
हतेरभावतः प्राप्तिरगणीयस्वरस्य च ।
द्वितीयाद्गणना कार्या तथैवं नष्टनिर्णयः ॥ ७९ ॥

## इति नष्टः ॥

[6a] नष्टस्य बोधकैरङ्कैरन्तस्वरगताङ्कके ।
पातात् शेषाङ्कतः सिद्धिरुद्दिष्टस्य प्रकीर्तिता ॥ ८० ॥

## इत्युद्दिष्टः ॥

स्वरो गीतादिवर्ती यः स ग्रहः परिकीर्तितः ।
प्रयोगे बहुलो यस्तु स स्वरोंऽशो बुधैर्मतः ॥ ८१ ॥

न्यासस्वरः स विज्ञेयो यः स्याद्गीतसमापकः ।
सोपन्यासाभिधः प्रोक्तो विदार्यास्तु समापकः ॥ ८२ ॥

76[b]. A. प्रस्तार द्रति,
77[c]. B. तातानां
78[a]. B. –स्थांकाः; 78[b]. प्रश्नोऽथांके
79[a]. A. जाता, 79[d]. A. अगण्यस्य 79[f]. B. तिथैवं, after 79. B. इति निष्ठः
80[b]. B. गतांक; 80[c]. B. यतान्; after 80 B. इत्युदिष्टः
81[b]. संग्रहः; 81[c]. B. युस्तु
82[bd]. B. समीपकः

छित्वा छित्वा प्रयोगो यः कृतः सा स्याद् विदारिका ।
षड्ज एव ग्रहः सर्वरागेषु परिकीर्त्तितः ॥ ८३ ॥

रक्तिहेतोः प्रयोज्यास्ते वर्णमात्रा निधादयः ।
नैव स्वरा यतस्ते तु षड्जवश्या भवन्ति हि ॥ ८४ ॥

## ॥ इति ग्रहांशन्यासलक्षणम् ॥

प्रोक्तो गानक्रिया वर्णः स चतुर्धा बुधैर्मतः ।
स्थाय्यारोह्यवरोही च सञ्चारी लक्षणं यथा ॥ ८५ ॥

स्थित्वा स्थित्वा प्रयोगः स्यादेकैकस्य स्वरस्य च ।
वर्णः स्थायी स विज्ञेयः परावन्वर्थसंज्ञकौ ॥
एतत्सम्मिश्रणाद्वर्णः सञ्चारीति निगद्यते ॥ ८६ ॥

## इति स्थाय्यादिवर्णलक्षणम् ॥

यथा वधूर्भाति न भूषणं विना यथा शशाङ्केन विना त्रियामा ।
तथैव गीतिः किल भारती च न शोभतेऽलङ्कृतिमन्तरेण ॥ ८७ ॥

विशिष्टस्वरसन्दोहमलङ्कारं बुधा जगुः ।
मृदुप्रसन्नौ मन्द्रस्य पर्यायौ द्वौ प्रकीर्तितौ ॥ ८८ ॥

तारस्वरस्य पर्यायो दीप्तो लि[6ᵇ]पिमथ ब्रुवे ।
मन्द्रो बिन्दुशिरास्तारश्चोर्ध्वरेखाशिराः स्वरः ॥ ८९ ॥

तत्रैव बहुभेदाः स्युः कल्प्यन्ते धीमता धिया ।
प्रोच्यन्ते न मया ते तु ग्रन्थविस्तरशङ्कया ॥ ९० ॥

83ᵇ. B. विदारका, 83ᶜ. B. षड्जस्याध्र– 83ᵈ. B. –कीर्तिताः
84ᵈ. B. षड्जवस्या; after 84 इति ग्रहांश...etc. not found in mss.
85ᵃ. B. प्रोक्ता; १ N. folio 9 being here.
86ᵃ. B. स्थित्वा प्रयोगः; 86ᵇ. B. –येकैकस्य; 86ᵈ. B. परो; 86ᶜ. B. मिश्रश्रणात्; N. मिश्रणा
89ᵃ. B. पर्यायौ 89ᶜ. शिरास्वार 89ᵈ. B. श्चोद्वीरेखा, A. स्वराः
90ᵇ. कल्यन्ते 90ᶜ. N. मय्या

रक्तिप्राप्तिः स्वरज्ञानं वर्णादीनां विचित्रता ।
इत्यादयो गुणास्तेभ्यो भवेयुर्नात्र संशयः ॥ ९१

## इत्यलङ्काराः

इति श्रीमन्नाट्यशास्त्रे श्रीकण्ठकविविरचितायां रसकौमुद्यां पूर्वखण्डे स्वरगताध्यायो नाम प्रथमः ॥ १ ॥*

91c. N. इत्यादयो; after 91 इत्यलङ्काराः not found in mss.
after 91 N. श्रीकण्ठविर- N. -ध्यायः प्रथमः
*N. runs only up to this.

# द्वितीयोऽध्यायः ।

अथ रागविवेकाख्ये द्वितीये वर्ण्यते क्रमात् ।
रागस्तुतिस्तु वीणायाः प्रशंसा तदनन्तरम् ॥ १ ॥

स्वराणां स्थापनं चैव भेदो वादनसम्भवः ।
विवेकश्चैव रागाणां ध्यानानि गमकादयः ॥ २ ॥

सर्वप्राणिमनोहरः प्रियतमावर्गप्रमोदप्रदः
स्वैरं कामकलाकलापजनको दुःखैकविध्वंसकः ।
गम्यो रागविदां वरैरपि भृशं चातुर्ययुक्तैर्जनै-
र्नानारूपविराजितो विजयते रागस्त्रिलोक्यां परम् ॥ ३ ॥

सुरासुराणां नरकिन्नराणां निरन्तरं मानसरञ्जनेन ।
रागो भवेत् पङ्कजशब्दतुल्यो व्युत्पत्तिमादाय च योगरूढः ॥ ४ ॥

रम्यध्वनिविशेषस्तु स्वरवर्णविराजितः ।
स रागो गीयते तज्ज्ञैर्जगन्मानसरञ्जकः ॥ ५ ॥

व्यक्तीभवन्ति वीणायां रा( $7^{a}$ )गाः सर्वे विशेषतः ।
वीणारूपं ततोऽत्रैव प्रोच्यते सादरं मया ॥ ६ ॥

वीणा घोषैकतन्त्र्या स्यात् तन्त्रीभ्यां नकुलाभिधा ।
त्रितन्त्रीभिस्त्रितन्त्र्याख्या चित्रा सप्तभिरेव च ॥ ७ ॥

विपञ्ची नवभिः ख्याता रम्या स्यान्मत्तकोकिला ।
तन्त्रीणामेकविंशत्या स्थानत्रयविभूषिता ॥ ८ ॥

समश्च वर्तुलाकारो व्रणग्रन्थ्यादिवर्जितः ।
रक्तचन्दनजो यद्वा खादिरो वंशसम्भवः ॥ ९ ॥

$1^{b}$. B. वर्ण्यते द्वितीये
$3^{a}$. B. प्रमोदः प्रदः   $7^{a}$. B. घोषैक
$7^{bc}$. B. स्या तंत्रीभ्यां

रक्तचन्दनजः श्रेष्ठो वीणादण्डः प्रकीर्तितः ।
दशमुष्टिमितो दैर्घ्ये कचिल्लक्ष्येऽधिको मतः ॥ १० ॥

परिणाहे यथायोग्यः कर्तव्यो लक्ष्यवेदिभिः ।
दण्डस्य ककुभस्याधः सन्धौ तुम्बं निवेशयेत् ॥ ११ ॥

तृतीयतूर्ययोः सार्योर्मध्येऽधस्तु द्वितीयकम् ।
पूर्वतः परतुम्बं तु किञ्चिद्विस्तारतोऽधिकम् ॥ १२ ॥

दण्डाग्रा अङ्गुले यद्वा चतुरङ्गुलतोऽप्यधः ।
रन्ध्रं कृत्वा क्षिपेत् शङ्कुं गलरन्ध्रयुतं चलम् ॥ १३ ॥

तस्मादङ्गुलतोऽधस्तादङ्गुलोत्सेधमोटकम् ।
शरपुङ्खसमं कृत्वा तस्माच्च किञ्चिदग्रतः ॥
निवेशयेत् स्थिरं शङ्कुं लक्ष्यलक्षणपण्डितः ॥ १४ ॥

ततो लोहमयीं तन्त्रीं गजकेशोपमां समाम् ।
तैलाक्तां वर्तुलां श्लक्ष्णां बध्नीयात्ककुभे दृढम् ॥ १५ ॥

सारिकामूर्ध्नि विन्यस्तामानीतां मोटकोपरि ।
द्वि( 7[b] )तीयप्रान्तसंलग्नां चलकीले च वेष्टयेत् ॥ १६ ॥

तावत्तं भ्रामयेच्छङ्कुं यावत्तन्त्री भवेद् दृढा ।
विपरीतभ्रमिः शङ्कोस्तन्त्रीशैथिल्यकारिणी ॥ १७ ॥

तन्त्रीदार्ढ्येऽतिदार्ढ्यार्थं चलशङ्कोर्गलस्थिते ।
रन्ध्रे न्यस्यायसं कीलं स्थिरशङ्कौ निवेशयेत् ॥ १८ ॥

---

10[c]. दैर्ध्ये 10[d]. B. कचि लक्ष्ये
13[b]. B. चतुरंगलु– 13[c]. B. रंध्रं 13[d]. –रंध्र–
14[c]. B. निवेशयत्
17[a]. B. भ्रामयेछेकुं 17[b]. B. भवेद्दढाः
17[c]. B. विपरीति– 18[a]. दाढ्यार्थं
18[c]. B. रन्ध्रे 19[a]. B. मषा 19[a]. B. बस्त्रस्य 19[d]. B. विशुद्धिना

मसीमिश्रेण वस्त्रस्य विशुद्धेनाऽमिना भृशम् ।
इष्टकाचूर्णमिश्रेण दृढार्थं मर्दितेन वा ॥
मधूच्छिष्टेन संश्लिष्टाः सार्यः कार्याश्च धीमता ॥ १९ ॥

दण्डे तिष्ठति माधवोऽर्णवसुता तन्त्र्यां च तुम्बे विधि-
भूतेशः ककुभे गिरीन्द्रतनया पत्र्यां गिरां देवता ।
नाभौ नागपतिर्गुणे ग्रहपतिः सार्यां तु जीवे विधु-
र्देवौ कालयुगेऽश्विनौ सुरपतिर्मेरौ विपञ्च्यां क्रमात् ॥ २० ॥

वीणेयं करसङ्गता सुरमयी सन्तोषसम्पादिनी
नानापातकनाशिनी स्मरकलारङ्गप्रमोदस्थली ।
वीणा शङ्करनारदप्रभृतिभिर्देवैरुपास्या मुदा
नादब्रह्मसमाश्रिता गुणमयी केषां भवेन्नो प्रिया ॥ २१ ॥

वीणा विशुद्धमेलाख्या मध्यमेलेति सा द्विधा ।
सर्वैकरागमेलाख्ये प्रत्येकं भवति द्विधा ॥ २२ ॥

वक्ष्यामि लक्षणं तत्र यदुक्तं रागवेदिभिः ॥ २३ ॥

या मन्द्रमध्यतारेषु स्थानेषु निखिलैः स्वरैः
युक्ता यदि तदा सर्वरागमेला [ 8ª ] प्रकीर्तिता ॥ २४ ॥

मध्ये तारे तथैकैकरागे स्यात्स्वरमेलनम् ।
एषैकरागमेलोक्ता वीणावादनतत्परैः ॥ २५ ॥

ऊर्ध्वं मञ्जुलवीणायां लोहतन्त्रीचतुष्टयम् ।
दक्षिणेऽधस्त्रयं तन्त्र्या बध्नीयाल्लक्ष्यवेदिभिः ॥ २६ ॥

ऊर्ध्वतन्त्रीषु या वामे तस्यां समनुमन्द्रकम् ।
पञ्चमं चानुमन्द्राख्यं द्वितीयायां निवेशयेत् ॥ २७ ॥

---

19ᶜ. B. इष्टिकाचूर्णि 19ᵉ A. मधूत्सि– B. मधुत्सि–
20ᵈ. B. देवौं
21ᵇ. B. नामापातक 21ᶜ. A. वाणी; B. वीणी
22ᵇ. B. मध्यमेलोत 22ᵈ. B. भवतो
24ᵇ. B. निषिलिः 26ᵈ. B. बध्नीया
27ᵇ. B. समतुमंद्रकं 27ᶜ. B. चातुमंद्रशख्यं

मन्द्रषड्जं तृतीयायां चतुर्थ्यां मन्द्रमध्यमम् ।
प्रथमाधस्थितन्त्रीषु मध्यसेन समश्रुतिः ॥ २८ ॥

मन्द्रपेन द्वितीयाऽपि तृतीया मन्द्रसेन च ।
कर्तव्यास्ताः पुनर्नाम्ना निगाद्याः श्रुतयो बुधैः ॥ २९ ॥

सारीनिवेशनं युक्त्या क्रमतः प्रतिपाद्यते ॥ ३० ॥

अनुमन्द्रसतन्त्र्याद्या शुद्धो रिः साद्यथातथा ।
निवेश्या प्रथमा सारी तया तन्त्र्या द्वितीयिका ॥ ३१ ॥

शुद्धगान्धारसिद्ध्यर्थं तया तन्त्र्या तृतीयिका ।
साधारणाख्यगान्धारसिद्धये क्रमशस्ततः ॥ ३२ ॥

तया तन्त्र्यैव तुर्यापि च्युतमध्यमहेतवे ।
शुद्धमध्यमसिद्ध्यर्थं सारिका पञ्चमी तया ॥ ३३ ॥

तन्त्र्या तया पुनः षष्ठी पतपञ्चमसिद्धये ।
शेषाभिश्च त्रितन्त्रीभिरुक्तसारीषु ये स्वराः ॥
वर्ण्यन्ते ते क्रमेणैव **गुरुणा** मे यथोदिताः ॥ ३४ ॥

पञ्चमेनानुमन्द्रेण या तन्त्री समुपाश्रिता ।
तया द्वितीयया तन्त्र्या जायते शुद्धधैवतः ॥ ३५ ॥

[8ᵇ] ततः शुद्धो निषादाख्यो निषादः कैशिकी पुनः ।
तत्पुरस्तात् पतः षड्जः शुद्धषड्जस्ततः परम् ॥ ३६ ॥

तत्पश्चादृषभः शुद्धः षडेते गदिताः स्वराः ॥ ३७ ॥

जातौ द्वितीयया तन्त्र्या विशुद्धौ यौ सरीस्वरौ ।
स्थाप्यौ नैव प्रयोगे तौ यतस्तन्त्र्या तृतीयया ॥ ३८ ॥

29ᵈ. B. निगद्याः
31ᵃ. B. मन्द्रसतं आद्या 31ᵈ. B. द्वितीयका
32ᵇ. B. तन्त्र्या
33ᶜ. B. सिद्धर्थं
34ᵃ. B. षष्टी 34ᵈ. B. सारीषुर्ये 36ᵃ. B. षड्भः

जायेते तौ पुनर्मन्द्रौ शुद्धो वीणाविदोदितौ ।
एतेऽनुमन्द्रजाः प्रोक्ताः कथ्यन्ते मन्द्रजाः क्रमात् ॥ ३९ ॥

तन्त्र्या तृतीयया मन्द्रसस्य सारीषु तास्वपि ।
तथैव स्युः क्रमादेते स्वरा जनमनोहराः ॥ ४० ॥

तत्र तावत्तया तन्त्र्या विशुद्धमध्यमो भवेत् ।
पतपञ्चमकः पश्चादप्रयोगौ पुनः स्वरौ ॥ ४१ ॥

संजायेते यतस्तन्त्र्यां चतुर्थ्यामिति निर्णयः ।
चतुर्थ्यापि पुनस्तन्त्र्या मन्द्रमध्यमयुक्तया ॥ ४२ ॥

षट्सु तास्वपि सारीषु भवेयुः क्रमशः स्वराः ।
पतपः प्रथमं शुद्धपञ्चमस्तदनन्तरम् ॥ ४३ ॥

शुद्धो धः शुद्धनिः पश्चान्निषादः कैशकी ततः ।
षड्जः पतादिरित्येते प्रोक्ता मन्द्रस्वरा मया ॥ ४४ ॥

पुरोदितासु सारीषु तन्त्रीभिश्च चतसृभिः ।
अनुमन्द्रास्तथा मन्द्राः प्रोद्दिष्टास्ते स्वयम्भुवः ॥ ४५ ॥

स्वीयकल्पनया नोक्ताः प्रामाण्यं तेषु विद्यते ।
**गुरुणा** मे यथोद्दिष्टा वीणायां सुप्रपञ्चिताः ॥
अत एवान्यथा कर्तुं भुवि को भव[9a]ति क्षमः ॥ ४६ ॥

संवादिनौ स्वरौ योज्यौ सर्वत्रापि परस्परम् ।
मध्ये तारेऽतितारेऽपि योजनीया यथाक्रमम् ॥
सारिकाः सुदृढं तस्यां लक्ष्यज्ञानविशारदैः ॥ ४७ ॥

43a. B. षड्सु 43c. पतदः
44b. B. कैशिकी
45b. B. चतस्रभिः
46a. B. कल्पनय 46c. B. यथोदिष्टा
47a. B. एवोन्यथा–

मध्यादिस्थानसारीषु तुर्यतन्त्र्युद्भवा ग्रहाः ।
प्रयोक्तव्याः स्वरा नैव भिन्नतन्त्रीभवा बुधैः ॥ ४८ ॥

अन्तरे कथिता नैव सारी काकलिनि स्वरे ।
साङ्कर्यं जायते यस्मान्नानुकूल्यं भजेत्ततः ॥ ४९ ॥

अन्तरस्य स्वरस्यापि सूक्ष्मः काकलिनो ध्वनिः ।
विचार्यो विज्ञवर्येण पतादिषड्जमध्ययोः ॥ ५० ॥

पतादिसमयोः सार्याविकैकश्रुतिवर्जिते ।
अन्तरः काकली स्यातां तयोः प्रतिनिधी च तौ ॥ ५१ ॥

शुद्धमेला मया प्रोक्ता मध्यमेलाऽधुनोच्यते ।
शुद्धमेलाख्यवीणायामूर्ध्वतन्त्री चतुष्टये ॥ ५२ ॥

युतानुमन्द्रपेनाद्या द्वितीया मन्द्रसेन च ।
तृतीया मन्द्रपेनापि चतुर्थी मन्द्रसेन च ॥ ५३ ॥

उपरिस्थिततन्त्रीभिश्चतसृभिः समं ध्रुवम् ।
अधोगतत्रितन्त्रीषु समानश्रुतिता भवेत् ॥ ५४ ॥

सरीशुद्धौ पतन्त्र्युत्थौ प्रयोगे सम्मतौ न हि ।
वीणावेदिभिरुद्दिष्टा मध्यमेलेयमीदृशी ॥ ५५ ॥

## ॥ इति स्वरस्थापनम् ॥

घातः पातश्च संलेखस्तथोल्लेखावलेखकौ ।
भ्रमरः सन्धितच्छिन्नौ नवमी नखकर्तरी ॥ ५६ ॥

48ᵇ. B. तंत्र्युद्भु–
49ᶜ. A. सांकार्यं 49ᵈ. AB. आनुकुल्यं
51ᶜ. B. काकिली 52ᵇ. –तन्त्रा–
54ᵇ. B. चतसृभिः B. ध्रुवम् 54ᵈ. B. –श्रुति
55ᵈ. मध्यमोले–
56ᵃ. B. थातः 56ᶜ. A. सन्धितश्छिन्नो

व्यापारा दक्षिणस्येति पाणे [9b], वामस्य तु द्वयम् ।
स्फुरितः खशितश्चेति, करयोरुभयोस्त्वमी ॥ ५७ ॥

घोषो रेफोऽथ बिन्दुः स्यात्कर्तरी चार्धकर्तरी ।
निष्कोटिताख्यः स्खलितः शुकवक्त्रश्च मूर्छना ॥ ५८ ॥

तलहस्तोऽर्धचन्द्रश्च प्रसारः कुहरोऽपरः ।
त्रयोदशेति सर्वेऽमी स्युश्चतुर्विंशतिर्युताः ॥ ५९ ॥

मध्यमाश्लिष्टतर्जन्या घातः स्यात्तन्त्रिकाहतिः ।

॥ इति घातः ॥

हतिः केवलतर्जन्या पात इत्यभिधीयते ॥ ६० ॥

॥ इति पातः ॥

तर्जन्याऽन्तर्हतिः प्रोक्तः संलेखो भरतादिभिः ।

॥ इति संलेखः ॥

उल्लेखः प्रोच्यते प्राज्ञैरन्तर्मध्ममया हतिः ॥ ६१ ॥

॥ इत्युल्लेखः ॥

अवलेखो मध्यमया भवेत्तन्त्रीहतिर्बहिः ।

॥ इत्यवलेखः ॥

भ्रमरोऽन्तर्हतिः शीघ्रं चतुरङ्गुलिभिः क्रमात् ॥ ६२ ॥

॥ इति भ्रमरः ॥

मध्यमाऽनामिकाभ्यां तु सन्धितस्ताडनं बहिः ॥ ६३ ॥

॥ इति सन्धितः ॥

58b. शुक-
59b. कुहुरो-
60b. B. थातः; after 60b. B. थाताः

तर्जनीपार्श्वसंश्लिष्टतन्त्र्या बहिरनामया ।
हतिश्छिन्नः समुद्दिष्टो **वीणावादनवेदिभिः** ॥ ६४ ॥

**॥ इति छिन्नः ॥***

चतुर्नखैः क्रमाद्घातस्स्वरितं नखकर्तरी ॥ ६५ ॥

**॥ इति नखकर्तरी ॥**

**॥ इति नव दक्षिणहस्तव्यापाराः ॥**

स्फुरितः सारणातन्त्री पृष्ठलग्नैव कम्पते ।
ज्ञेयः सारणयातन्त्रीघर्षणं खशितो मुहुः ॥ ६६ ॥

**॥ इति स्फु**[10a]**रितखशितौ ॥**

**[॥ इति द्वौ वामहस्तव्यापारौ ॥]**

तन्त्री लग्नाङ्गुष्ठपार्श्वा कर्त्तरीवत्तु हन्यते ।
कनिष्ठासारणाभ्यां वा घोषोऽसौ यत्र भण्यते ॥ ६७ ॥

**॥ इति घोषः ॥**

दक्षिणस्यानामिकया तन्त्रीरन्तर्निहन्यते ।
वामस्य मध्यमाङ्गुल्या रेफो घाताद्बहिर्मतः ॥ ६८ ॥

**॥ इति रेफः ॥**

अनामया बहिस्तन्त्रीहतेर्जातो ध्वनिर्यदा ।
क्रियते स्थितिरेवात्र तर्जन्या बिन्दुरुच्यते ॥ ६९ ॥

**॥ इति बिन्दुः ॥**

*MS. A. misses folio 10. Folio 9 ends with st. 64
64c. B. हतिच्छिन्नः; after 65B ॥ इति...दक्षण... ॥
66a. B स्फुरिते 66b. B. -लग्नैव 66d B. घर्षणम्
after 66 इति द्वौ......रौ not found in B.
67a. B. लग्ना-
68d. B. मतम्

चतुरङ्गुलिभिश्चैव क्रमशः करयोर्द्वयोः ।
तन्त्रीघातो बहिः शीघ्रं कर्त्तरी परिकीर्तिता ॥ ७० ॥

**॥ इति कर्तरी ॥**

करोति दक्षिणो हस्तः कर्तरीं तन्त्रिकां परः ।
हन्ति सारणया यत्र प्राहुस्तामर्धकर्तरी ॥ ७१ ॥

**॥ इत्यर्धकर्तरी ॥**

निहन्ति सारणां त्यक्त्वा यत्र तन्त्रीं प्रदेशिनी ।
निष्कोटिताभिधो हस्तो गद्यते **वाद्यवेदिभिः** ॥ ७२ ॥

**॥ इति निष्कोटितः ॥**

उत्क्षिप्तया सारणया तन्त्रीं वामो द्रुतं यदा ।
निहन्ति कर्तरीयुक्तो दर्शितः स्खलितस्तदा ॥ ७३ ॥

**॥ इति स्खलितः ॥**

तन्त्र्या घर्षणमङ्गुष्ठतर्जन्योर्जायते यदा ।
अग्राभ्यां शुकवक्त्राख्यं तदा **वाद्यविदो** विदुः ॥ ७४ ॥

**॥ इति शुकवक्त्रः ॥**

उद्वेष्टपरिवर्ताभ्यां तन्त्र्यां भ्राम्यति दक्षिणे ।
स्वरस्थाने द्रुतं [10b] क्रमासारणं मूर्छना मता ॥ ७५ ॥

**॥ इति मूर्छना ॥**

तलेन दक्षिणो हस्तस्तन्त्रीं हन्ति पुनः परः ।
तर्जन्या संस्पृशेद्यत्र तलहस्तो भवेदसौ ॥ ७६ ॥

**॥ इति तलहस्तः ॥**

72b. B. तन्त्री प्रदेशनी
73b. B. तंत्री 73c. B. निहंती
74b. B. तज्जीन्यार 74c. B. शुककवत्रास्थ्यम् 74d. B. वाद्यविदा
after 74. B. ॥ इति...वकः ॥
75a. B. तन्त्र्या 75b. B. भ्राम्यतिर्दक्षणे

स्पर्शेऽङ्गुष्ठकनिष्ठाभ्यामर्धचद्रं जगुर्बुधाः ।

**॥ इत्यर्धचन्द्रः ॥**

चतुरङ्गुलिसङ्घाते कुञ्चिताङ्गुष्ठके तले ।
कनिण्ठातर्जनीपार्श्वस्पर्शस्तन्व्याः प्रसारकः ॥ ७७ ॥

**॥ इति प्रसारकः ॥**

करस्य किञ्चित्साङ्गुष्ठसकलाङ्गुलिकुञ्चने ।
कनिष्ठ्यङ्गुलिसंस्पर्शस्तन्व्याः स्यात्कुहरः करः ॥ ७८ ॥

**[॥ इति कुहरः ॥]**

**॥ इति त्रयोदशोभयहस्तव्यापाराः ॥**

**॥ इति चतुर्विंशतिहस्ताः ॥**

यत्र शुद्धाः स्वराः सप्त भवेयुश्चित्तरञ्जकाः ।
स स्यान्मुखारिकामेलः सजातीया भवन्त्यतः ॥ ७९ ॥

सन्यासांशग्रहा पूर्णा मुखारी गीयते सदा ।
कतिचिद्गमकैर्युक्ता कष्टसाध्या **सुबुद्धिभिः** ॥ ८० ॥

**॥ अथ ध्यानम् ॥**

शिखण्डधम्मिल्लमिलद्विपञ्चीं प्रपञ्चयन्ती चलदङ्गुलीभिः ।
चतुर्भुजा चारुचकोरनेत्रा मुखारिका चन्द्रमुखी विभाति ॥ ८१ ॥

**॥ इति मुखारीविवेकः ॥**

ध्यानं विना रागसमूहमेतं गायन्ति रागे निपुणा जना ये ।
सङ्गीतशास्त्रोक्तफलानि रागास्तेभ्यः प्रयच्छन्ति कदापि नैव ॥ ८२ ॥

---

folio 11 of A. begings here.
after 78 ॥ इति कुहरः ॥ not found in B.
80[d]. B. कष्टस्याध्या
81[c]. B. मुखरी
82[d]. B. प्रयछंति

अतो मया रागकदम्ब [11ᵃ] कस्य निगद्यते ध्यानमिदं यथोक्तम् ।
दृष्ट्वा मुनीनां मतमेव सर्वं संगीतशास्त्रोक्तफलस्य सिद्ध्यै ॥ ८३ ॥

शुद्धाः सरीमपाः शुद्धो धः पतादिसमध्यमौ ।
मेलो मालवगौडस्य रागस्यापि तदा भवेत् ॥ ८४ ॥

एतस्मान्मालवो गौडः सौराष्ट्री गुर्जरी पुनः ।
मल्लारी बहुली पाली गौडी पञ्चमभैरवौ ॥ ८५ ॥

भवन्त्यन्येऽपि कर्णाटबङ्गालललितादयः ।
रागः स्यान्मालवो गौडो निषादत्रयमण्डितः ॥ ८६ ॥

रिपहीनः क्वचित्सायं रजनी तस्य मूर्छना ॥ ८७ ॥

## ॥ अथ ध्यानम् ॥

उत्तुङ्गवक्षोरुहनम्रकान्तकान्तासमालिङ्गितगौरगात्रः ।
हेमस्फुरत्कुण्डलमण्डितास्यो विराजते मालवगौडरागः ॥ ८८ ॥

## ॥ इति मालवगौडः ॥

पूर्णा सौराष्ट्रिका षड्जत्रयेण समुपाश्रिता ।
गायकैर्गीयते सायं क्वचित्पत्रयभूषिता ॥ ८९ ॥

## ॥ अथ ध्यानम् ॥

उत्तुङ्गपीनस्तनलोलहारा कर्णोत्पलाऽलिध्वनिदत्तचित्ता ।
प्रियान्तिकं याति विलोलबाहुः सौराष्ट्रिका कुङ्कुमलिप्तगल्ला ॥ ९० ॥

## ॥ इति सौराष्ट्री ॥

ग्रहांशन्यासरिः पूर्णा प्रातर्गेया तु गुर्जरी ।
बहुलीमिश्रिता नित्यं षड्जहीना क्वचिद्भवेत् ॥ ९१ ॥

83ᶜ. B. मुनीनां तमेव
84ᵃ. B. सरीमपा
88ᵃ. A. कान्ताकान्ता 88ᵈ. B. गौडरागः
89ᵃ. B. पूर्ण 91ᵇ. A. गूर्ज्जरी

॥ ध्यानम् ॥

इन्दीवरश्यामतनुः सुकेशी पाटीरपत्रावलिचारुत[ 11b ]ल्पा ।
श्रुतिस्वरव्यूहविभागरम्या तन्त्रीन्मुख.न्( ? ) मञ्जुलगुर्जरीयम् ॥ ९२

॥ इति गुर्जरी ॥

पत्रयेण युता प्रातर्मह्लारी रीविवर्जिता ।
वर्षास्वपि विशेषेण प्रगेया सुखदायिनी ॥ ९३ ॥

॥ ध्यानम् ॥

मृणालतन्वी पिककण्ठनादिनी गानच्छलेन स्मरति प्रियं स्वकम् ।
विपञ्चिकामञ्जुलपाणिरुत्तमा मह्लारिका यौवनभारसन्नता ॥ ९४ ॥

॥ इति मह्लारिका ॥

मध्यमांशग्रहन्यासा रिधहीनाथवाऽनया ।
प्रमेया बहुली **प्राज्ञैः** संध्यायामिति निर्णयः ॥ ९५ ॥

॥ ध्यानम् ॥

दूर्वादलश्यामलभव्यगात्रा शय्यातलस्थार्पितनव्यपात्रा ।
प्रसूनमालापरिबद्धकेशा विलासिनीयं बहुली विभाति ॥ ९६ ॥

॥ इति बहुली ॥

षड्जग्रहांशा सन्यासा गरिक्ता पालिका मता ।
**गानज्ञै**र्गीयते सायं कतिभिर्गमकैर्युता ॥ ९७ ॥

॥ ध्यानम् ॥

पाली ललाटोदितचन्द्रलेखा प्रफुल्लराजीवसमत्रिनेत्रा ।
भागीरथीपूतजटाकलापा चकास्ति मुक्ताफलचारुहारा ॥ ९८ ॥

---

92b. AB. पात्रा; after 92. ॥ इति गुर्जरी ॥ not given in B. after 93. ॥ ध्यानम् ॥ not given in B.
94a. B. तादिनी 94b. AB. गानछ्लेन; B प्रियस्वकम् 94d. B. संन्नता
96d. B. बहूली; after 96. B. ॥ इति बहूली ॥
97d. कतिचिद्गमकान्विता 98b. B. प्रफूल्ल–

## ॥ इति पाली ॥

सत्रया धगरिक्ता स्याद्गौडी सर्वाङ्गमञ्जुला ।
गायकैर्गीयते सायं गम्भीरगुणगुम्फिता ॥ ९९ ॥

## ॥ ध्यानम् ॥

रसालनव्याङ्कुरकर्णपूरा कादम्बिनीश्यामलमञ्जुदेहा ।
[12ª] पीयूषनिष्यन्दिमृदुस्वनाढ्या गौडीति युक्ताऽधिककौतुकेन ॥ १०० ॥

## ॥ इति गौडी ॥

पञ्चमांशग्रहन्यासो राजते रागपञ्चमः ।
रिरिक्तो गीयते प्रातः सत्रयेणाऽथवा युतः ॥
उच्यते केनचित्पूर्णः शृङ्गाररसदीपकः ॥ १०१ ॥

## ॥ ध्यानम् ॥

रक्ताम्बुजाक्षोऽरुणचारुचीरो युवा सुवेषो रतिरङ्गयुक्तः ।
प्रत्यूषकाले विजयी नितान्तं स पञ्चमाख्यः कलकण्ठभाषी ॥ १०२ ॥

## ॥ इति पञ्चमः ॥

यदीयांसग्रहन्यासाः षड्ज एव निगद्यते ।
रिपास्तो भैरवो रागः प्रभाते स प्रगीयते ॥ १०३ ॥

## ॥ अथ ध्यानम् ॥

गङ्गाधरश्चन्द्रकलोत्तमाङ्गो भुजङ्गमव्यूहविभूषिताङ्गः ।
शुभ्राम्बरः शूलविभूतिधारी स भैरवाख्यो जयति प्रकामम् ॥ १०४ ॥

## ॥ इति भैरवः ॥

गत्रयेण मनोज्ञोऽसौ बङ्गालो रिविवर्जितः ।
पूर्णो मत्रययुक्तो वा **कल्लिनाथ**मतं त्विदम् ॥ १०५ ॥

---

100ª. B. कर्णा– 100ᵇ. B. कांदंबिनी– 100ᶜ. AB. निःस्यंदि–
103ª. A. यदीयांशसग्रह–
104ᵇ. AB. भूजंगम; B. –वूह– A. विभुषि–

॥ ध्यानम् ॥

भस्मोज्ज्वलाङ्गस्तरुणार्कवर्णो जटाकलापं शिरसा दधानः ।
कक्षास्थलस्थूलवलत्करण्डो बङ्गालरागः कथितस्तपस्वी ॥ १०६ ॥

॥ इति बङ्गालगौडः ॥

सग्रहन्यासस्संयुक्तः सांशः पञ्चमवर्जितः ।
प्रातः प्रयुज्यते नित्यं पूर्णः कैरपि संमतः ॥
धत्रयेण समायुक्तो मतोऽन्यैर्ललितो बुधैः ॥ १०७ ॥

॥ ध्यानम् ॥

[12b] सप्तच्छदानां कुसुमैर्विचित्रो गौरो युवा पङ्कजपत्रनेत्रः ।
विभाति नित्यं ललिताभिधानः प्रसन्नवक्त्रः सविलासवेषः ॥ १०८ ॥

॥ इति ललितः ॥

॥ इति मालवगौडमेलसम्भवाः ॥

चतुःश्रुतिरिधौ यत्र भवेतां नियतं स्वरौ ।
साधारणोऽपि गान्धारो निषादः कैशिकी पुनः ॥ १०९ ॥

वीणिकाविषये शुद्धाः षड्जमध्यमपञ्चमाः ।
श्रीरागस्यापि मेलोऽयं गदितो गायकोत्तमैः ॥ ११० ॥

श्रीरागो मालवश्रीश्च धन्नासी भैरवी ततः ।
देवगान्धाररागाद्याः प्रभवन्ति परे ततः ॥ १११ ॥

दिनान्ते गीयते षड्जग्रहांशन्यासशोभितः ।
आद्यमूर्छनया पूर्णः श्रीरागो वा धगोज्झितः ॥ ११२ ॥

106a. AB. भस्मोज्व–; 106d. B. कथिता
107c. AB. समायुक्ताः; 107f. AB. मतान्या ललिता
108a. AB. सप्तछदानां, 108c. B. –भिधानं
109a. A. चतुःश्रुती
111a. B. मालवश्रीच 111b. B. धन्यासी 111d. A. भवन्त्यप–
112b. B. ग्रहांस; B. सोभितः 112d. B. धगोज्जितः ।

## ॥ अथ ध्यानम् ॥

कन्दर्पमूर्तिस्तरुणोऽरुणाम्बरः कर्णावतंसीकृतनव्यपल्लवः ।
षड्जादिसेव्यः क्षितिपालसुन्दरः श्रीरागनामा नितरां विभासते ॥ ११३ ॥

## ॥ इति श्रीरागः ॥

पूर्णा षड्जत्रयोपेता मालवश्रीः सदा भवेत् ।
रिधाल्पा रसशृङ्गारवर्धिनी चित्तरञ्जिनी ॥ ११४ ॥

## ॥ ध्यानम् ॥

प्रफुल्लरक्तोत्पलपाणिरेषा मन्दस्मितोद्भासितगल्लयुग्मा ।
स्वैरं निषण्णा सहकारमूले विभाति नित्यं किल मालवश्रीः ॥ ११५ ॥

## ॥ इति मालवश्रीः ॥

षड्जत्रयेण संयुक्ता सदा पूर्णा प्र[ 13a ]गीयते ।
भैरवस्वरसंमिश्रा भैरवी रिपमुद्रिता ॥ ११६ ॥

## ॥ ध्यानम् ॥

सुवर्णवर्णा घनवाद्यहस्ता विशालनेत्रा द्विजराजवक्त्रा ।
नित्यं स्थिता स्फाटिकचारुपीठे कैलासशृङ्गे किल भैरवीयम् ॥ ११७ ॥

## ॥ इति भैरवी ॥

धन्नासिका प्रभातेऽसौ षड्जत्रितयमण्डिता ।
रिधहीना रसे वीरे गीयते गायकोत्तमैः ॥ ११८ ॥

## ॥ ध्यानम् ॥

नीलोत्पलश्यामलमूर्तिरेषा प्रियं लिखन्ती विरहेण युक्ता ।
श्रीखण्डचर्चा विलसत्कुचास्या धन्नासिका भाति मनोज्ञवेषा ॥ ११९ ॥

113d. B. विभाराते
114b. B. मालवःश्री 114d. A. –वर्द्धनी; A. –रंजनी
115a. A. पाणिरेखा 115c. AB. निषणा
117d. AB. कैलाश–
119d. AB. –द्धन्यासिका–; after 119. A ॥ इति धन्यासी ॥

॥ इति धन्नासी ॥

सम्पूर्णो देवगान्धारः षड्जत्रयविभूषितः ।
गायकैर्गीयमानोऽसौ शोभां धत्ते निरन्तरम् ॥ १२० ॥

॥ ध्यानम् ॥

गन्धर्वविद्याधरकिन्नराणां नितम्बिनीभिः परिवेष्टितोऽसौ ।
नृत्योत्सवे प्रीतिमुपैति देवगान्धाररागो नितरां प्रसिद्धः ॥ १२१ ॥

॥ इति देवगान्धारः ॥
॥ इति श्रीरागमेलसम्भवाः ॥

निगौ त्रिश्रुतिकौ यत्र पताद्यौ षड्जमध्यमौ ।
विशुद्धनट्टमेलोऽसौ शुद्धाः षड्जमपञ्चमाः ॥
शुद्धनट्टादयस्तस्माज्जायन्तेऽन्ये मनोहराः ॥ १२२ ॥

शुद्धनट्टः स विज्ञेयो ग्रहांशन्यासषड्जकः ।
गमकैर्गीयते सायं यस्याद्या मूर्छना मता ॥ १२३ ॥

॥ ध्यानम् ॥

तुरङ्गमारूढवि [ 13b ] शालबाहुर्विशुद्धचामीकरचारुवर्णः ।
रणे प्रतापी रुधिरार्द्रदेहो विराजते शुद्धनटाख्यरागः ॥ १२४ ॥

॥ इति शुद्धनट्टः ॥

शुद्धाः समगपा यत्र शुद्धो निः पतमध्यमः ।
निः कैशकी च कर्णाटगौडमेलोऽयमुच्यते ॥ १२५ ॥

[ शुद्धबङ्गाल-सामन्त-तोडी-घण्टारवादयः ।
अन्ये भवेयुरेतस्माद्रागा रसिकरञ्जकाः ॥ १२६ ॥]

निषादत्रितयं यत्र सम्पूर्णो वा रिधोज्झितः ।
दिनान्ते गीयते नित्यं कर्णाटोऽयं सुखावहः ॥ १२७ ॥

---

121[a]. AB. –किंन्नराणां 121[b]. –तेसौ 122[d]. B. तस्माज–
123[b]. A. –न्यांस– 123[c]. गमकौ–
125[b]. B. पतमध्यमाः
126. not found in B; Supplied from A. 127[b]. रिंधौज्झितः

## ॥ ध्यानम् ॥

राजीवनेत्रः पृथुलातपत्रः पद्मं वहन् दक्षिणहस्तकेन ।
स्तुत्यो नृपः किंनरचारणाद्यैः कर्णाटरागः करवालपाणिः ॥ १२८ ॥

## ॥ इति कर्णाटगौडः ॥

मध्यमांशग्रहन्यासो बङ्गालः शुद्ध ईरितः ।
सम्पूर्णो गीयते प्रातः सर्वरागविचक्षणैः ॥ १२९ ॥

## ॥ ध्यानम् ॥

मनोज्ञवेषः कमनीयकेशः प्रफुल्लनेत्रः शरदिन्दुवक्त्रः ।
सदा विलासी नवगेहवासी बङ्गालनामा रविकल्पधामा ॥ १३० ॥

## [॥ इति बङ्गालः ॥]

सामन्तः सत्रयेणाप्तः सप्तस्वरविभूषितः ।
गेयः प्रभातकालेऽसौ काकल्यन्तरराजितः १३१ ॥

## ॥ ध्यानम् ॥

करधृतकरवालः शत्रुसन्दोहकालः प्रधनविधिकरालः प्रौढकीर्त्या विशालः ।
हृदयनिहितमालः कुङ्कुमव्याप्तभालः स्फुरति धरणिपालः ख्यातसामन्तरागः॥१३२॥

## ॥ इति सामन्तः ॥

तोडी मत्रयसंयुक्ता गातव्या दिवसोदये ।
मन्या हतापकम्पा च गायकस्वान्तरञ्जिनी ॥ १३३ ॥

## ॥ ध्यानम् ॥

मृणालकुन्देन्दुसमानगात्री विलिप्तदेहा हरिचन्दनेन ।
विनोदयन्ती विपिने कुरङ्गं तोडी विपञ्चीं दधती कराभ्याम् ॥ १३४ ॥

128[a]. B. –नेत्र 128[a]. B –लातपत्र–
129[b]. B. बंगालः 130[b]. B. प्रफूल्ल; after 130 इति बङ्गालः not found in MSS.
132[b]. B. प्रधनमधि 133[d]. A. रंजनी 134[c]. B. विपने.

॥ इति तोडी ॥

धैवतांशग्रहन्यासो भवेद्गान्धारवर्जितः ।
घण्टारवोऽयं विख्यातः सर्वदा गीयते बुधैः ॥ १३५ ॥

॥ ध्यानम् ॥

करे दधानः किल शङ्खमेकं वामे च घण्टां कलनादरम्याम् ।
धौताम्बरं चारुकटीप्रदेशो घण्टारवोऽयं हरिभक्तमुख्यः ॥ १३६

॥ इति घण्टारवः ॥

॥ इति कर्णाटमेलोद्भवाः ॥

[ शुद्धाः सगमपाः शुद्धधैवतो यत्र दृश्यते ।
गनी त्रिश्रुतिकौ मेलो वसन्तस्य तदा भवेत् ॥ १३७ ॥ ]
भूपालिकादयो रागाः कतिचित् प्रभवन्ति हि ॥ १३८ ॥
षड्जत्रययुतः पूर्णो वसन्तो वा रिपोज्झितः ।
प्रातर्मधौ प्रयोक्तव्यो वीररौद्राद्भुते रसे ॥
सहायः पञ्चबाणस्य रागो हिन्दोलसम्भवः ॥ १३९ ॥

॥ ध्यानम् ॥

शिखण्डिपिच्छोच्चयचारुचूडश्चूताङ्कुरोद्भासुरकर्णपूरः ।
नव्याम्बुदश्यामतनुर्विलासी वसन्तरागोऽतिमनोहरश्रीः ॥ १४० ।

॥ इति वसन्तः ॥

भूपाली सत्रयेणाढ्या मनीहीनोदितोषसि ।
रिपहीना मते केषां रसे शान्ते प्रयुज्यते ॥ १४१ ॥

---

136b. B. वामेत्र　136c. AB. कुटी–
137. Not found in B; supplied from A.
139b. B. रिपोश्चितः　139d. B. रौद्री–
140a. B. पिञ्छोचय　140b. B. चुताङ्कुर
141b. B. मती–　141d. B. प्रयुज्यतेः

## ॥ ध्यानम् ॥

उत्तुङ्गवक्षोरुहभारनम्रा गौरी स्फु [ 14b ] रत्कुङ्कुमलिप्तदेहा ।
सम्पूर्णशीतांशुमनोज्ञवक्त्रा भूपालिका सैव पतिं स्मरन्ती ॥ १४२ ॥

## ॥ इति भूपाली ॥

## ॥ इति वसन्तमेलोद्भवाः ॥

यदा समपगाः शुद्धा निः शुद्धः षड्जमध्यमौ ।
पताद्यौ रागकेदारमेलः प्रोक्तस्तदा **बुधैः** ॥ १४३ ॥

वेलावली ततः पश्चान्नट्टनारायणाभिधः ।
शङ्कराभरणाद्याश्च भवन्त्यस्मात्परेऽपि च ॥ १४४ ॥

निषादत्रयसंयुक्तः केदारो वा रिपोज्झितः ।
**धीरैः** प्रगीयते सायं काकलीस्वरभूषितः ॥ १४५ ॥

## ॥ ध्यानम् ॥

गङ्गाधरः सुन्दरचन्द्रमौलिर्भुजङ्गमोद्भासुरयज्ञसूत्रः ।
ध्याने निविष्टो धृतयोगपीठः केदाररागो जटिलो विभाति ॥ १४६ ॥

## ॥ इति केदारः ॥

प्रातर्वेलावली पूर्णा ग्रहांशन्यासधैवता ।
प्रयुज्यते रसे वीरे रिपाभ्यां वा विवर्जिता ॥ १४७ ॥

## ॥ ध्यानम् ॥

विधाय सङ्केतमियं प्रियेण हेम्नोल्लसद्भूषणमुद्वहन्ती ।
स्मरं स्मरन्ती स्मरकामिनीव वेलावली श्यामतनुर्विभाति ॥ १४८ ॥

## ॥ इति वेलावली ॥

142b. B. स्फुरत्
143b. B. तिः ; शुद्धम्
145a. B. –संयुक्ता    145d. B. काकिली–
146d. B. विभातिः    148c. B. कामिनीभा

नट्टनारायणो रागः षड्जत्रितयभूषितः ।
काकल्यन्तरसंयुक्तो गातव्यः सर्वदा बुधैः ॥ १४९ ॥

**॥ ध्यानम् ॥**

नव्याम्बुदश्यामतनुर्मनोज्ञः प्रफुल्लपङ्केरुहलोचनश्रीः ।
चतुर्भुजः शङ्खगदारिपद्मैर्नारायणोऽसौ नितरां विभाति ॥ १५० ॥

**॥ इति नट्टनारायणः ॥**

शङ्क[ 15[a] ]राभरणो रागः षड्जत्रयमनोहरः ।
गेयः सूर्योदये नित्यं मुद्रिताभिधभूषितः ॥ १५१ ॥

**॥ ध्यानम् ॥**

महेशमौलीन्दुसुधातितृप्तः स्फुरत्फणास्थूलमणिप्रदीप्तः ।
भुजङ्गमूर्तिः कमनीयकीर्तिर्विराजते शङ्करभूषणाख्यः ॥ १५२ ॥

**॥ इति शङ्कराभरणः ॥**

**॥ इति केदारमेलोद्भवाः ॥**

शुद्धौ सगौ मपौ शुद्धौ पतादिकौ मसौ पुनः ।
त्रिश्रुतिः स्यान्निषादोऽपि मल्लारस्यापि मेलनम् ॥
अत्रैव गौडमल्लारकामोदीप्रमुखा मताः ॥ १५३ ॥

धैवतांशग्रहन्यासः षड्जपञ्चमवर्जितः ।
मल्लारो गीयते प्रातर्गानविद्याविशारदैः ॥ १५४ ॥

**॥ ध्यानम् ॥**

वीणातिवादः कलकण्ठनादः सुवर्णवर्णः स्फुरदब्जकर्णः ।
काश्मीरचित्रः शरदिन्दुवक्त्रो मल्लारनामा नितरां विभाति ॥ १५५ ॥

---

150[a]. B. श्यामतर्य- 150[d]. B. नारायणोसो
152[c]. B. भूजङ्ग-
153[a]. B. सणो 153[e]. A. गौंड-
154[a]. B. धैवतांस- 155[d], 156 and 157[a]. repeated in B.

## ॥ इति मल्लारः ॥

किञ्चिद्विभेदो भेदज्ञैरन्योन्यं रसपुञ्जयोः ॥ १५६ ॥

पूर्णा धत्रयसंयुक्ता मल्लारनिकटस्थिता ।
गेया प्रत्यूषकाले [ 15ᵇ ] सा कामोदी कामदीपिनी ॥ १५७ ॥

## ॥ ध्यानम् ॥

पीताम्बरा काकलिनादिनीयं सुकेशपाशा विपिने रुदन्ती ।
विलोकयन्ती भयमुद्वहन्ती कामोदिका नाथमनुस्मरन्ती ॥ १५८ ॥

## ॥ इति कामोदी ॥

## ॥ इति मल्लारमेलोद्भवाः ॥

पतादिकौ समौ यत्र गान्धारस्त्रिश्रुतिर्भवेत् ।
विशुद्धाः समपा निः स्युर्मेले देशाक्षिकोद्भवे ॥ १५९ ॥

पूर्णा देशाक्षिका ज्ञेया भूषिता गत्रयेण च ।
वीरे रसे प्रयोज्या सा प्रातःकाले प्रगीयते ॥ १६० ॥

## ॥ ध्यानम् ॥

सम्पूर्णशीतांशुमनोज्ञवक्त्रा प्रफुल्लराजीवविलोलनेत्रा ।
प्रांशुः प्रसन्ना सविलासबाहुर्देशाक्षिकेयं गदिता **मुनीन्द्रैः** ॥ १६१ ॥

## ॥ इति देशाक्षी ॥

## ॥ इति देशाक्षीमेलोद्भवाः ॥

यत्र शुद्धौ सपौ स्यातां गनी च सपतौ सपौ ।
साधारणोऽपि गान्धारो मेलः कल्याणसम्भवः ॥
एतस्मादपि कामोदहमीराद्या भवन्ति हि ॥ १६२ ॥

---

156ᵃ. A. गौंड– 157ᵇ. B. स्थिताः 158ᵇ. B. पाशाविंपने
159ᶜ. B. समयानिं 160ᵃ. B. वेशाक्षिकी
161ᵇ. B. प्रफुल्लराजिवविलौल– 161ᶜ. B. प्रांशुः

*त्रिषड्जो गीयते सायं पूर्णः कल्याणसंज्ञकः ।*
रित्रयेणाथवा युक्तः प्रोक्तः **सङ्गीतवेदिभिः** ॥ १६३ ॥

॥ ध्यानम् ॥

करे कृपाणं तिलकं ललाटे धत्ते प्रविष्टः समरे प्रचण्डः ।
आरक्तवर्णस्तपनीयभूषः कल्याणरागो **मुनिना** प्रदिष्टः ॥ १६४ ॥

॥ इति कल्याणः ॥

कामोदो गीयते पूर्णो निशाऽऽदौ सत्र [ 16[a] ]-याऽन्वितः ।
ईषद्भेदो **बुधैः** प्रोक्तः कल्याणाख्यहमीरयोः ॥ १६५ ॥

॥ ध्यानम् ॥

पीताम्बरः फुल्लसरोजनेत्रो नितम्बिनीमण्डलमध्यवर्ती ।
युवा मनोज्ञः स्मितभासुरास्यः कामोदरागो नितरां विभाति ॥ १६६

॥ इति कामोदः ॥

॥ इति कल्याणमेलोद्भवाः ॥

विशुद्धौ षड्जगान्धारौ तथा मध्यमपञ्चमौ ।
पताद्यौ च समौ यत्र निषादः कैशिकी पुनः ॥
सारङ्गरागमेलेऽस्मिन् सारङ्गः प्रमुखो भवेत् ॥ १६७ ॥

सारङ्गो गीयते पूर्णः षड्जत्रयविराजितः ।
मध्याह्नकालतः पश्चाद् **गीतज्ञै**श्चित्तरञ्जकः ॥ १६८ ॥

॥ ध्यानम् ॥

प्रसूनमालापरिबद्धकेशो वीणां दधानो लसदंसदेशे ।
समं प्रियाभिः सहकारमूले सारङ्गरागो रसिको विभाति ॥ १६९ ॥

165[c]. B. इषद्भेदो 166[a]. B. पीतांबराफू- 167[f]. AB. सारंगप्र-
168[c]. A. मध्यांह्न 168[c]. AB. पश्चात्
169[a]. B. -माली 169[b]. B. देशे

## ॥ इति सारङ्गः ॥
## ॥ इति सारङ्गमेलोद्भवाः ॥

इत्येवं बहवो भेदाः **सुधीभिर्लक्ष्यवेदिभिः** ।
प्रकल्पनीया वीणायां नोक्ता विस्तरशङ्कया ॥ १७० ॥

उडवः पञ्चभिः प्रोक्तः स्वरैः षड्भिस्तु षाडवः ।
सम्पूर्णः सप्तभिस्त्वेवं त्रिधा रागा **बुधैर्**मताः । १७१ ॥

रागास्ते त्रिविधाः प्रोक्ताः शुद्धाश्छायालगास्ततः ।
सङ्कीर्णाश्च पृथक् तेषां लक्षणं प्रतिपाद्यते ॥ १७२ ॥

अन्यै रागैर्न युक्ता ये शुद्धास्ते परिकीर्तिताः ।
छायालगा मता **प्राज्ञैः** पररक्तियुताश्च ये ॥
द्वयो रक्तियुता ये तु सं [ 16[b] ]-कीर्णास्ते निरूपिताः ॥ १७३ ॥

भूपालः शिशिरे, वसन्तसमये गेयो वसन्तो मुदा ।
ग्रीष्मे भैरवसंज्ञकोऽतिसुभगो, वर्षासु मेघाभिधः ॥
रागो **रागविदां वरैः** किल शरत्काले पुनः पञ्चमो ।
हेमन्ते च नटात्परोऽतिरुचिरो नारायणाख्यः क्रमात् ॥ १७४ ॥

## ॥ इति ऋतुरागाः ॥

पूर्वाह्णं **सुधियो** वसन्तसमयं, मध्याह्नकालं पुन–
र्गीष्मं, वारिधरागमं च दिवसस्यान्त्यं विभागं तथा ।
रात्र्यर्धं शरदं वदन्ति, रजनीशेषं तुषारागमं
नित्यं शैशिरके दिनेऽपि नितरामित्थं ऋतोः कल्पना ॥ १७५ ॥

गमकः स्यात्स्वरे कम्पो जनानां चित्तरञ्जकः ।
अनेके तस्य भेदाः स्युः प्रोच्यन्ते कतिचिन्मया ॥ १७६ ॥

---

170[b]. B. मिःर्लक्ष्य–  170[d]. B. संकया
171[b]. AB. षड्भि–  171[c]. A. सप्तभिवं
172[c]. B. संकीर्णाश्च थक्  173[a]. B. रागैर्न र्युक्ता  173[c]. B. द्वियो
* Folios 17-75 missing in A
174[b]. B. ग्रीष्मै  175[a]. B. पूर्वाह्नं;  175[d]. B. नितरामिथं; B. क्रतोः

तिरिपः स्फुरितो लीनः कम्पिताऽऽन्दोलितौ वलिः ।
प्लावितोल्लासितौ चैव त्रिभिन्न-कुरुलाऽऽहताः ॥ १७७ ॥

गुम्फितो मुद्रितश्चैव नामितो मिश्रितस्तथा ।
एते पञ्चदश प्रोक्ताः प्रसिद्धगमका बुधैः ॥ १७८ ॥

द्रुततुर्यांशवेगेन तिरिपो गमको भवेत् ।
प्रोक्तो द्रुततृतीयांशवेगेन स्फुरितो बुधैः ॥ १७९ ॥

द्रुतवेगाद्भवेल्लीनो, द्रुतार्धेन च कम्पितः ।
आन्दोलिताख्यो गमको लघुवेगसमुद्भवः ॥ १८० ॥

चक्रवेगाद्वलिः प्रोक्तः प्लावितः प्लुतमानतः ।
स्व [17ª]-रारोहः क्रमाद्यत्र भवेदुल्लासितः स तु ॥ १८१ ॥

स्थानत्रयेऽप्यविच्छिन्नस्त्रिभिन्नः स्याद्घनध्वनिः ।
कुरुलो वलिरेव स्याद्ग्रथिलो यन्त्रकोमलः ॥ १८२ ॥

निवृत्तः स्वरमाहत्य पुरोगमाहतो भवेत् ।
हृदयाह्लादिहुंकारगम्भीरो गुम्फिताभिधः ॥ १८३ ॥

मुद्रितो गमकः प्रोक्तो मुखमुद्रणसम्भवः ।
स्वराणां नामनात् प्रोक्तो गमको नामितो बुधैः ।
सर्वेषां मिश्रणान्मिश्रस्तस्य भेदा ह्यनेकशः ॥ १८४ ॥

## ॥ इति गमकाः ॥

रागव्यक्तिनिबन्धः स्यादभ्यासेन विना यदा ।
सहोत्पन्नं शरीरेण शारीरं तन्निगद्यते ॥ १८५ ॥

भवेच्चतुर्विधं तच्च करालं मधुरं पुनः ।
सौबलं बहुभङ्गीति तल्लक्षणमथोच्यते ॥ १८६ ॥

178ª. B. मुहित 179ᶜ. B. तृतीयांस 180ᶜ. B. -ताख्य: 181ᵈ. B. सतु:
183ᵈ. B. ब्रुम्फिता-
184ª. B. मुहितो; 184ᵇ. B. मुख: 184ᶜ. B. मिश्रणामिश्र-
185ᵈ. B. शारीरं भिगद्यते 186ª. B. भविचतुविधं

त्रिषु स्थानेषु कठिनं करालं तद्विदुर्बुधाः
माधुर्यं मन्द्रमध्ये च शारीरं मधुरं स्मृतम् ॥ १८७ ॥

रागप्रकाशकं तारे सौबलं परिकीर्तितम् ।
बहुभङ्गी तदेव स्यादेतत्रितयमिश्रितम् ॥ १८८ ॥

## ॥ इति शारीरम् ॥

नानारागकलाकलापकुशला बिम्बाधरेणोज्ज्वला
गायिन्योऽखिलगीतवाद्यनिपुणा ताले च दक्षा लये ।
रम्याः कोकिलकण्ठमञ्जुलतरध्वाना प्रगल्भा रसे
साक्षात्कामजयश्रियः सदसि ताः शोभां परं तन्वते[ $17^b$ ] ॥ १८९ ॥

चञ्चत्पाणिपरिस्फुरन्मणिलसत्केयूरभासान्विता
वीणावादनचातुरीचयचमत्कारैः सभामोहिनी ।
श्रीखण्डागुरुकेसरोज्ज्वलरसैरत्यन्तभास्वत्तनुः
कौशेयाम्बररञ्जिताऽतिमधुरा गाने रता गायिनी ॥ १९० ॥

त्रिस्थानाऽऽलापदक्षो गमकलयकलाकाकुविज्ञोऽतिधीरो
नव्योक्ती रोषरिक्तः सकलजनमनोरञ्जकः सावधानः ।
शुद्धच्छायालगज्ञः श्रमरहिततनुः कोकिलप्रख्यकण्ठ—
स्तालाभिज्ञो ग्रहज्ञः स भुवि निगदितो गायकानां वरेण्यः ॥ १९१ ॥

द्रुतं यः शिक्ष्यते गीतं विषमं प्राञ्जलं तथा ।
शुद्धे वा सालगे सम्यक् शिक्षाकारः स उच्यते ॥ १९२ ॥

सुश्रावं गीतमाकर्ण्य यो भवेत् पुलकान्वितः ।
सानन्दोऽश्रुभिराकीर्णो रसिको गायकः स्मृतः ॥ १९३ ॥

नीरसं सरसं कुर्वन् निर्भावं भावसंयुतम् ।
ज्ञात्वा श्रोतुरभिप्रायं यो गायेत् स तु भावुकः ॥ १९४ ॥

189ª. B. -कुशला, उज्वला   190ᶜ. B. केसरोज्वल-   191ª. B. आलापदक्ष्ये
193ᶜ. B अश्रेभिराकीर्णो

मनो हरति गीतेन विदित्वा श्रोतुराशयम् ।
रङ्गं गीते विधत्ते यो रञ्जकः सोऽभिधीयते ॥ १९५ ॥

यथाशास्त्रप्रयोगेण मार्गं देशाख्यमेव च ।
यो गायति क्रियादोषात् कथ्यतेऽसौ क्रियापरिः ॥ १९६ ॥

स्वरो वर्णश्च तालश्च स्पष्टं घटयति त्रयम् ।
सुन्दरध्वनिसंयुक्तः सुघटं तं प्र [18a]-चक्षते ॥ १९७ ॥

गीतादिद्विविधालप्तिं कुर्यात्सौख्यविधायिनीम् ।
आलप्तिगायकः सोऽयं निर्दिष्टो **गीतवेदिभिः** ॥ १९८ ॥

आलप्तेरपि यद्गीतं भवेदतिमनोहरम् ।
उक्तो **गायकभेदज्ञैः** सोऽयं रूपकगायकः ॥ १९९ ॥

शुद्धच्छायालगे चैव गीतमालप्तिसंयुतम् ।
यो गायति स विज्ञेयश्चोपज्ञो **गीतवेदिभिः** ॥ २०० ॥

नानाविधविभक्तं च ध्वनौ यस्य भवेद्द्रुतम् ।
निबन्धः स तु विज्ञेयो **गीततत्त्वविचक्षणैः** ॥ २०१ ॥

रागे रागान्तरच्छायां मिश्रयन् दोषवर्जितः ।
प्रवीणत्वेन संगायन् **बुधै**र्मिश्र उदाहृतः ॥ २०२ ॥

## ॥ इति गायकलक्षणम् ॥

रसानुरूपरागाणामज्ञत्वमविदग्धता ।
ग्राम्योक्तिरपशब्दश्च प्रबन्धज्ञानहीनता ॥ २०३ ॥

## ॥ इति वाग्गेयकारदोषाः ॥

स्वररागान्यरागाणां देशस्य क्षेत्रयन्त्रयोः ।
छाया स्यात् षट्प्रकारेति तल्लक्षणमिहोच्यते ॥ २०४ ॥

श्रुतिनानाधिकतया रागे स्वरस्य कस्यचित् ।
छाया या दृश्यते तां तु स्वरच्छायां जगु**र्बुधाः** ॥ २०५ ॥

196b. B. देशाय-  198a. B.-पिद्विधा-;  198d. B. गीतविदिभिः
200d. B. उपज्ञो  202c. B. सो गायन  203a. B. रसानु-

या रागस्य निजा छाया रागच्छायां तु तां विदुः ।
रागे रागान्तरच्छाया सैव स्यादन्यरागजा ॥ २०६

देशच्छायोद्भवा रागे देशच्छायोच्यते **बुधैः** ।
रागस्योत्पत्तिभूः क्षेत्रं शरीरं जगदुर्बु[ 18b ]-**धाः** ॥ २०७ ॥

तस्यैवानुकृतित्वाच्च क्षेत्रच्छायेति सा मता ।
वीणावंशादियन्त्रोत्था यन्त्रच्छाया स्मृता **बुधैः** ॥ २०८ ॥

## ॥ इति षोढा च्छाया ॥

यत्र संस्थाप्यते रागः स स्थायी स्वर उच्यते ।
स्थायिस्वराच्चतुर्थो यो द्व्यर्द्धः स परिकीर्त्तितः ॥ २०९ ॥

अष्टमो द्विगुणः प्रोक्तो **मुनिभिर्भरतादिभिः** ।
चतुर्थाष्टमयोर्मध्ये यत्र त्वर्धस्थिता मता ॥ २१० ॥

द्व्यर्धादधस्तेन चालान्मुखचालः स्वरे भवेत् ।
स्वस्थानं प्रथमं द्व्यर्धस्वरे चालाद् द्वितीयकम् ॥ २११ ॥

अर्धस्थिते चालनतः स्वस्थानं तृतीयं मतम् ।
द्विगुणे चालनात्तुर्यमेभिरालप्तिरुच्यते ॥ २१२ ॥

सर्वगीतप्रबन्धानामादावालप्तिरिष्यते ।
आलप्तिः सा द्विधा प्रोक्ता विषमा सरला तथा । २१३ ॥

साक्षराऽनक्षरा सापि चतुर्धा भिद्यते ततः ।
सतालाऽतालभेदेन चतुर्धाऽप्यष्टधा भवेत् ॥ २१४ ॥

शुद्धसालगभेदेन सैव षोडशधा मता ।
वर्णैर्नानाविधैः स्थायैरलङ्कारैरलङ्कृता ॥ २१५ ॥

आल[ 19a ]-प्तिरुच्यते भूरिभङ्गिभेदैर्युता **बुधैः** ।
यत्रैवांशग्रहन्यासे सम्पूर्णौडवषाडवे ॥ २१६ ॥

206-207 written twice in B.

206b. B. रागाछायां 207a. B. दशछायो- ; 207c. B. रागस्योत्तत्तिभूक्षत्रं
210d. B. यत्र स्वर्द्ध- 212c. B. चालातुर्य 216c. B. यत्रैवांस-

मन्द्रमध्ये तथा तारे पन्यासे शुद्धसालगे ।
विवेकश्चैव सङ्कीर्णे रागालाप इति स्मृतः ॥ २१७ ॥

॥ इत्यालप्तिः ॥

भीतः क्रूररवः शिरालवदनग्रीवः करालाननः
सीत्कारी विरसध्वनिर्नयनयोर्मुद्रान्वितः कम्पितः ।
अव्यक्ताऽक्षरगद्गदस्वनयुतः प्रोत्फुल्लगलः स्वर–
भ्रष्टः कम्पितविग्रहोऽसमगलः सन्दष्टदन्तस्तथा ॥ २१८ ॥

तालस्थानविचारमूढहृदयो नासास्वरस्पर्शकः
शुद्धं सालगमिश्रितं वितनुते गात्रप्रसारी तथा ।
रोगग्रस्तकलेवरोऽङ्गरहितः किंवाऽधिकाङ्गः खलः
खर्वो दीर्घतरोऽकलः क्षितितले निन्द्यास्त्वमी गायकाः ॥ २१९ ॥

॥ इति गायकदोषाः

इति श्रीमन्नाट्यशास्त्रे श्रीकण्ठकविविरचितायां रसकौमुद्यां पूर्वखण्डे स्वरगताध्यायो नाम द्वितीयः ॥ २ ॥

218ª. B. भीतं ; 218ᶜ. B. प्रस्फूल ; 218ᵈ. कम्पितविग्रहो

# तृतीयोऽध्यायः ।

स्फूर्जद्रत्नावलिरुचिचलत्कुण्डलद्वन्द्वकान्तः
स्वच्छन्दं यो मधुरमुरलीरन्ध्रसारङ्गरङ्गः ।
स्वैरं रेमे विमलयमुनाहारितीरे वधूभिः
स श्रीकृष्णो रचयतु चिरं शर्म भक्तानुकम्पः ॥ १ ॥

अथ प्रबन्धाध्याये तु कथ्यन्ते तृतीये क्रमात् ।
[ 19ᵇ ] गीतपङ्केरुहोत्पत्तिर्धातवोऽङ्गानि जातयः ॥ २ ॥

शुद्धसूडः प्रबन्धाश्च प्रसिद्धाः कतिचित्ततः ।
प्रबन्धरीतयश्छायालगसूडो गुणादयः ॥ ३ ॥

षड्जादिस्वरकान्तकन्दकलितं तन्मूर्छनानालभृत्
तानश्रेणिविचित्रपत्रनिवहैः संशोभितं भूरिशः ।
नानारागपरागमुत्तमजनालिव्यूहपेयं रसैः
पूर्णं, गीतपरारविन्दमनिशं नौमि प्रमोदास्पदम् ॥ ४ ॥

लक्ष्यप्रवीणो न हि शास्त्रवेत्ता शास्त्रप्रवीणो न हि लक्ष्यदक्षः ।
यो वेत्ति लक्ष्यं सकलं च शास्त्रं वाग्गेयकारश्च स एव सूरिः ॥ ५ ॥

गीतं स्यात्स्वरसन्दोहः श्रोतॄणां चित्तरञ्जकः ।
सूरिभिस्तद् द्विधा प्रोक्तं गान्धर्वगानभेदतः ॥ ६ ॥

गान्धर्वैर्गीयते स्वर्गे तद्गान्धर्वमुदाहृतम् ।
यत्तु वाग्गेयकारेण कृतं तद्गानमुच्यते ॥ ७ ॥

पृथिव्यामुपयोगित्वाद्गानमेव निगद्यते ।
निबद्धं चानिबद्धं च तद्गानं द्विविधं भवेत् ॥ ८ ॥

---

219ᵃ. B. नाशास्वर; 219ᵇ. B. मत्रप्रसारी
1ᵃ. B. स्फूर्ज्जद्रत्ना– 3ᶜ. B. रीतयः छा - 3ᵈ. B. गूणादयः
4ᵇ. B. तानश्रेष्टि–
5ᵃ. B. -प्रविणो; तद्दि 5ᵇ. B. दक्ष्यलक्ष्यः
6ᵃ. repeated in B. 6ᶜ. B. तद्विधा

अङ्गैश्च धातुभिर्बद्धं तन्निबद्धं प्रकीर्तितम् ।
आलप्त्याद्यनिबद्धं **तद्गीतज्ञैः** परिगीयते ॥ ९ ॥
प्रबन्धो रूपकं वस्तु निबद्धस्याभिधात्रयम् ॥ १० ॥
चतुर्भिर्धातुभिर्बद्धः षड्भिरङ्गैर्मनोहरः ।
**गीतशास्त्रविदग्धेन** प्रबन्धः स प्रकीर्तितः ॥ ११ ॥
अनिर्युक्तश्च [ 20[a] ]निर्युक्तः प्रबन्धः प्रोच्यते द्विधा ।
तत्राऽऽद्यो दृश्यते यत्र छन्दस्तालाद्यनिश्चयः ॥ १२ ॥
द्वितीयः स भवेद्यत्र छन्दस्तालादिनिर्णयः ।
धातुः प्रबन्धावयवश्चतुर्धा स प्रकीर्तितः ॥ १३ ॥
प्रथमो भाग उद्ग्राहस्ततो मेलापको भवेत् ।
ध्रुवो ध्रुवत्वात्तत्पश्चादाभोगः प्रान्तसम्भवः ॥ १४ ॥
ध्रुवाऽऽभोगान्तरे त्वन्यो धातुरुक्तोऽन्तराभिधः ।
स तु सालगसूडस्थरूपकेष्वेव विद्यते ॥ १५ ॥
येनैवोद्ग्राह्यते गीतं तेनोद्ग्राहः प्रकीर्तितः ।
मेलापको **बुधैः** प्रोक्त उद्ग्राहध्रुवमेलनात् ॥ १६ ॥
ध्रुवत्वेन प्रबन्धेषु ध्रुव इत्यभिधीयते ।
आभोगः प्रोच्यते **प्राज्ञैः** प्रबन्धपरिपूरकः ।
प्रबन्धः स त्रिधा द्वित्रिचतुर्धातुः क्रमान्मतः ॥ १७ ॥
प्रबन्धस्य षडङ्गानि स्वरस्तालस्तथा पदम् ।
तेनः पाटश्च बिरुदं क्रमाल्लक्ष्माऽभिदध्महे ॥ १८ ॥
सरिगाद्याः क्रमात् प्रोक्ताः स्वराः शोभावहाः स्वयम् ।
तालः कालक्रियामानमर्थस्य बोधकं पदम् ॥ १९ ॥
माङ्गल्यसूचकस्तेनः पाटो वाद्याक्षरोच्चयः ।
बिरुदं तु गुणोत्कीर्तिरङ्गित्वं प्रोच्यतेऽधुना ॥ २० ॥

16[d]. B. –मेजनात्  17[f]. B. –धातु  18[b]. B. स्वरतालः
18[d]. B. लक्ष्या-, 19[a]. B. क्रमाप्रोक्ताः  20[a]. B. मागला–  20[c]. B. गुणोकीर्तिः

नेत्रे तेनपदे तत्र, स्तः पाटबिरुदे करौ।
तालस्वरौ तदङ्घ्री च प्रबन्धः पुरुषो मतः ॥ २१ ॥

जातयः पञ्च वि[20b]-ज्ञेयाः प्रबन्धेषु क्रमाद् बुधैः।
षडङ्गैर्मेदिनी प्रोक्ता पञ्चभिर्नन्दिनी मता ॥ २२ ॥

चतुर्भिर्दीपिनी ख्याता त्रिभिरङ्गैस्तु भाविनी।
ततस्तारावली द्वाभ्यामङ्गाभ्याममभिजायते ॥ २३ ॥

गणादयः प्रबन्धादौ कथ्यन्ते साम्प्रतं क्रमात्।
सर्वत्र फलदायित्वाद्भवेयुरुपयोगिनः ॥ २४ ॥

मगणस्त्रिगुरुः पृथ्वीदैवतः श्रीप्रदो भवेत्।
यगणो वारुणो वृद्धिप्रदो मुखलघुर्मतः ॥ २५ ॥

मध्यलो मृत्युदो ज्ञेयो रगणो वह्निदेवतः।
सगणोऽन्तगुरुर्वायुदैवतो देशभ्रंशकृत् ॥ २६ ॥

तगणोऽन्तलघुर्व्योमदैवतो धननाशकः।
मध्यगो जगणः सूर्यदैवतोऽरुक्प्रदो भवेत् ॥ २७ ॥

भगणश्चन्द्रदैवत्यो मुखगः कीर्तिवर्द्धनः।
नगणस्त्रिलघुः प्रोक्त आयुर्दः स्वर्गदैवतः ॥ २८ ॥

## ॥ इति गणाष्टकफलम् ॥

अवर्गस्य विधुर्देवः फलमायुः प्रकीर्तितम् ॥ २९ ॥

भौमो दैवस्तथा दिव्यमानुषश्च यथाक्रमम्।
**प्रबन्धज्ञैः** प्रबन्धोऽसौ त्रिधेति परिकीर्तितः ॥ ३८ ॥

21d. B. प्रबन्ध- 22a. B. जायतः 22c. B. मेदनी
23a. B. दीपनी 24a. B. गयादयः 25a. B. त्रिपुरुः 26d. B. भृंशकृत्
28c. B. नगणः त्रिलघुप्रोक्तः 29b. B. फलमायुः
After 29 some 9 sts. seem to be missing.
38a. B. भोमो देवः

दिव्यः स्याद् दिव्यभाषाद्यैर्मानुषो मृत्युभाषया ।
भाषावैचित्र्यसम्बद्धः प्रोच्यते दिव्यमानुषः ॥ ३९ ॥

एलाकरणढेंकीभिर्वर्तिन्या झोम्बडेन च ।
लम्भरासैकतालीभिः शुद्धसूडोऽष्टधामतः ॥ ४० ॥

एलाऽऽद्यचरणे तत्र कुर्यात्खण्डद्वयं [21ª]कविः ।
अनुप्रासयुतं तुल्यधातुना तद्विनिर्मितम् ॥ ४१ ॥

ततः प्रयोगस्तत्पश्चात्पल्लवाख्यं पदत्रयम् ।
प्रयोगममुमाचष्टे मेलापं कोऽपि पण्डितः ॥ ४२ ॥

ध्रुवस्ततः प्रकर्तव्यः स्तुत्यनाम्ना समन्वितः ।
तथा विभूषितो मध्यविलम्बितपदैस्त्रिभिः ॥ ४३ ॥

समधातु प्रकर्तव्यं तत्र पूर्वपदद्वयम् ।
तृतीयं भिन्नधातु स्यादाभोगस्तदनन्तरम् ॥ ४४ ॥

कार्यो वाग्गेयकारेण स्वीयनाम्ना विभूषितः ।
ध्रुवे गीत्वा पुनर्न्यासो ग्रहस्तु विषमो मतः ॥ ४५ ॥

**भरताद्यैः** पुरा प्रोक्तमेलासामान्यलक्षणम् ।
एलासु शौर्यसौभाग्यत्यागधैर्यादिवर्णनम् ॥ ४६ ॥

द्वितीयमण्ठकङ्कालप्रतितालेषु गीयते ।
एलानां बहवो भेदा नोक्ता विस्तरशङ्कया ॥ ४७ ॥

## ॥ इत्येलासामान्यलक्षणम् ॥

उद्ग्राहः प्रथमे पादे भवेत् पूर्वं पदद्वयम् ।
पल्लवस्य त्रयं पश्चादेवं पञ्च पदानि हि ॥ ४८ ॥

एवमेव द्वितीयेऽपि तृतीये पल्लवं विना ।
पदद्वयं भवेत्तस्मादुद्ग्राहे द्वादश स्फुटम् ॥ ४९ ॥

39ª. B. दिव्यः स्यदिव्य 39ᶜ. B. –संबधः 40ᵇ. B. जोबडेन
41ᵇ. B. कठिः 42ᵇ. B. पदवियंना 42ᵈ. B. मेलापकोपि
45ᶜ. B. ध्रुवं गीत्वा पुरनन्र्यासो
46ᵇ. B. –सामन्य–; after 47 B. –सामन्य– 48ᵇ. B. भवे पूर्वं

ध्रुवे त्रीणि तथाऽऽभोगे पदमेकं प्रकीर्तितम् ।
एवमेलाप्रबन्धे स्युः पदानि षोडश क्रमात् ॥ ५० ॥

**॥ इत्येलाषोडशपदविवेकः ॥**

कामी च मघवा कान्तो जितो मत्तो विकारवान् ।
मान्धा[ 21b ]-ता सुमतिः शोभी सुशोभी गीतकोऽनुगः ॥ ५१ ॥

विचित्रो वासवमृदुसुचित्रा इति षोडश ।
नामान्येलापदानां स्युः षोडशानां यथाक्रमम् ॥ ५२ ॥

पद्मालया पत्रिणी च रञ्जिनी सुमुखी शची ।
वरेण्या वायुवेगा च वेदिनी मोहिनी जया ॥ ५३ ॥

गौरी ब्राह्मी च मातङ्गी चण्डिका विजया तथा ।
चामुण्डैलापदेष्वेताः प्रोक्ताः षोडशदेवताः ॥ ५४ ॥

समानो मधुरः सान्द्रः कान्तो दीप्तः समाहितः
अग्राम्यः सुकुमारश्च प्रसन्नौजस्विनाविति ।
मान्धात्रादिपदेषु स्युः प्राणा दश दशस्विमे ॥ ५५ ॥

**॥ इत्येला ॥**

स्वराद्यं पाटपूर्वं च बन्धाद्यं च पदादिमम् ।
तेनाद्यं बिरुदाद्यं च चित्राद्यं मिश्रपूर्वकम् ॥
इत्यष्टौ करणानि स्युः क्रमाल्लक्षणमुच्यते ॥ ५६ ॥

उद्ग्राहध्रुवकौ सान्द्रस्वरैर्बद्धौ यदा पुनः ।
आभोगाख्यः पदैर्बद्धो गातृस्वाम्याख्यया युतः ॥ ५७ ॥

तालो रासश्च विज्ञेयः करणं स्वरपूर्वकम् ।
अन्यान्यपि तथैव स्युस्तद्भेदः किञ्चिदुच्यते ॥ ५८ ॥

---

51[a]. B. कांमी 52[a]. B. -मृदुः 52[c]. B. नामान्येमेला-
53[a]. B. पत्रीणी 53[b]. B. रंजनी 54[c]. B. चामुंडेला
55[f]. B. प्राणदश 56[b]. B. पदामिदम् 58[cd]. B. स्युःस्तमेदः

स्वरैः सहस्तपाटैस्तु तत्पाटकरणं मतम् ।
कीर्तितं तद् द्विधा **प्राज्ञैः** क्रमव्यत्यासभेदतः ॥ ५९ ॥

स्वरैर्मृदङ्गपाटैर्यत्तद्बन्धकरणं स्मृतम् ।
स्वरैः पदैश्च यद्बद्धं पदादिकरणं हि तत् ॥ ६० ॥

स्वरैश्च बिरुदै[22a]-र्बद्धं करणं बिरुदादिदम् ।
स्वरैस्तेनैश्च यद्बद्धं तत्तेनकरणं स्मृतम् ॥ ६१ ॥

स्वरैः सहस्तपाटैश्च निबद्धं मुरजाक्षरैः ।
पदैस्तच्चित्रकरणं प्रोद्दिष्टं **भरतादिभिः** ॥ ६२ ॥

स्वरैः पाटैः सतेनैश्च यद्बद्धं मिश्रकं हि तत् ।
मङ्गलारम्भ आनन्दवद्र्धनः कीर्तिपूर्विका ॥ ६३ ॥

लहरीति, त्रिधा तानि प्रत्येकं गानभेदतः ।
नवानां वह्निभेदेन तानि स्युः सप्तविंशतिः ॥ ६४ ॥

## ॥ इति करणानि ॥

यत्रोद्ग्राहस्य पूर्वार्धं द्विवारं च प्रगीयते ॥ ६५ ॥

उत्तरार्धं सकृत्तस्मान्मेलापको भवेन्न वा ।
प्रयोगात्मा च तौ कार्यौ **सुधीभि**स्तालशून्यकौ ॥ ६६ ॥

ढेंकीताले च कङ्कालताले किंवा विलम्बिते ।
लयान्तरेऽन्यताले च ध्रुवाभोगौ ध्रुवः पुनः ॥ ६७ ॥

त्रिखण्डस्तस्य खण्डे द्वे गातव्ये तुल्यधातुनी ।
तृतीयमुच्चमेताभ्यां द्विर्णयोऽसौ ततः सकृत् ॥ ६८ ॥

आभोगश्च पुनर्गीत्वा ध्रुवे न्यासस्तु ढेंकिका ।
**भरता**द्यैरिदं प्रोक्तं ढेंकीसामान्यलक्षणम् ॥ ६९ ॥

59c. B. तद्विधा    59d. B. व्यन्यास–    60c. B. स्वरै पदैःश्च
61c. B. तेतैश्च    62a. B. पाटेश्च    62b. B. मरुजा–
62d. B. प्रोदिष्टं    63a. B. स्वरेः    65b. B. द्विर्वारं
68b. B. षुल्य–    69b. B. ध्रुवम्

॥ इति ढेंकी ॥

करणस्य स्वराद्यस्य लक्षणं यत्पुरोदितम् ।
भवेत्तदेव वर्तिन्यां तालोऽन्यो रासकालयः ।
विलम्बितो, **बुधैः** प्रोक्ता वर्तिनी च विवर्तिनी ॥ ७० ॥
समन्वयेऽनयोः कश्चिद्विशेषः स च कथ्यते [ 22b ] ॥ ७१ ॥
प्रगातव्यो द्विरुद्ग्राहो ध्रुवाभोगौ सकृन्मतौ ।
ध्रुवे न्यासोऽत्र तालाः स्युः कङ्कालमण्ठकादयः ॥ ७२ ॥

॥ इति वर्तिनी ॥

यत्रोद्ग्राहस्य पूर्वार्धं द्विवारं गीयते सकृत् ।
उत्तरार्धं तु मेलापः प्रयोगाद्यो भवेन्न वा ॥ ७३ ॥
वारद्वयं ध्रुवो गेयः सकृदाभोगसंज्ञकः ।
ध्रुवे न्यासो भवेदेवं झोम्बडो **मुनिभिर्मतः** ॥ ७४ ॥
निःसारुर्गारुगीरासः कुडुक-प्रतिमण्ठकौ ।
त्रिपुटश्चाड्डुतालश्च यतिलग्नौ द्वितीयकः ॥ ७५ ॥
एकतालीत्यमी ताला झोम्बडे नियता दश ।
विभेदैस्ते मताः प्राज्ञैर्व्योमचन्द्रेषुवह्नयः ॥ ७६ ॥

॥ इति झोम्बडः ॥

द्विर्गातव्यो यदुद्ग्राहो द्विखण्डो वैकखण्डकः ।
दिर्ध्रुवश्च तथाभोगो ध्रुवे न्यासः स लम्भकः ॥ ७७ ॥

॥ इति लम्भकः ॥

रासो झोम्बडवज्ज्ञेयो गमकस्थानशून्यकः ।
रासतालो भवेत्तत्र भेदाः स्युरस्य भूरिशः ॥ ७८ ॥

71[a]. B. समन्वेप्यनयोः  72[a]. B. उद्ग्राहौ  74[b]. B. सत्तदा;
74[c]. B. ध्रुवान्योसो
76[d]. व्योम- etc. = 3510 cf. also 82[d].
78[a]. B. झोंवडत्

॥ इति रासः ॥

वारद्वयं प्रगातव्यावुद्ग्राहध्रुवकावपि ।
आभोगध्रुवकौ पश्चान्न्यासश्चेत्येकतालिका ॥ ७९ ॥

उद्ग्राहं मेनिरे **केचि**दस्यामालापमात्रतः ।
एकताली मता सैव **मुनिभिर्भरतादिभिः** ॥ ८० ॥

॥ इत्येकताली ॥

षट्पञ्चाशद्युतं ज्ञेयमेलानां च शतत्रयम् ।
करणानामपि **प्राज्ञैः** प्रोद्दिष्टा सप्तविंशतिः ॥ ८१ ॥

[23[a]]प्रबन्धवेदिभिस्त्रिंशत् ढेंक्योऽपि परिकीर्तिताः ।
वर्तिनी द्विविधा ज्ञेया झोम्बडः खेन्द्विषुत्रयः ॥ ८२ ॥

अष्टौ लम्भाः समुद्दिष्टा रासास्तु पञ्चविंशतिः ।
एकताली परिज्ञेया संख्यैलादाविति क्रमात् ॥ ८३ ॥

केचिदन्येऽपि भेदाः स्युस्तत्र सूक्ष्माश्च ते भृशम् ॥ ८४ ॥

॥ इति शुद्धसूडक्रमः ॥

अप्रसिद्धाः प्रसिद्धाश्च **मतङ्गा**दिमतोदिताः ।
केचिदन्येऽपि कथ्यन्ते प्रबन्धाः साम्प्रतं मया ॥ ८५ ॥

जयमाला प्रमोदश्च वर्णः क्रौञ्चपदाभिधः ।
मङ्गलो मङ्गलाचारस्ततो रागकदम्बकः ॥ ८६ ॥

नन्दाख्यो रससन्दोहः पञ्चतालेश्वराभिधः ।
गजलीलाऽश्वलीला च श्रीरङ्गस्तालसागरः ।
पार्वतीतिलको हर्षवर्द्धनः शुकसारिकः ॥ ८७ ॥

After 78 B. राशः
81[a]. B. षद्यं चात्राद्युतं 81[c]. B. यकरणा- 81[d]. B. प्रोदिष्टा
82[b]. B. ढैक्यो 82[d]. खेन्दु etc. = 3510 cf. also 76[d]. 84[a]. B. केच्चिदित्ये
85[ff]. are numbered fresh in B as 1, 2, etc. up to 65 ( end ).
86[c]. B. चारःस्ततो 87[c]. B. गगलीला

श्रीकण्ठो नवरत्नश्च श्रीविलासः सुदर्शनः ।
सूर्यप्रकाशकश्चन्द्रप्रकाशः कलहंसकः ॥ ८८ ॥

प्रबन्धानामिति प्रोक्ता द्वाविंशतिर्द्वयाधिका ।
प्रत्येकं लक्षणं तेषां **श्रीकण्ठेनो**च्यतेऽधुना ॥ ८९ ॥

जयमाला प्रगातव्या जयतालमनोहरा ।
जयादिपदसम्बद्धा त्रिधा सा भिन्नलक्षणा ॥ ९० ॥

मेदिनी नन्दिनी प्रोक्ता ततो वृन्दावनी क्रमात् ।
मेदिनी जयतालेन तेनाऽन्येन च नन्दिनी ॥ ९१ ॥

वृन्दावनी च विख्याता जयेनाऽन्यद्वये[ 23b ]-न च ।
गद्यपद्यप्रबन्धेन गातव्या **गीतकोविदैः** ॥ ९२ ॥

## ॥ इति जयमाला ॥

पदैः पाटैश्च तेनैश्च सतालो गीयते मुदा ।
प्रमोदाख्यप्रबन्धोऽसौ प्रमोदजननः सदा ॥ ९३ ॥

## ॥ इति प्रमोदः ॥

कर्णाटभाषया वर्णो विरुदैर्वर्णतालतः ।
तालत्रैविध्यतः **प्राज्ञै**स्त्रैविध्यं तस्य कथ्यते ॥ ९४ ॥

## ॥ इति वर्णः ॥

पदैः स्वरैः स्वरन्यासः प्रतितालेन गीयते ।
**बुधैः** क्रौञ्चपदः क्रौञ्चपदाख्यच्छन्दसाकृतिः ॥ ९५ ॥

## ॥ इति क्रौञ्चपदः ॥

मङ्गलं घोण्टरागे वा कैशिक्यां मङ्गलैः पदैः ।
विलम्बितलये गेयं मङ्गलच्छन्दसाऽथवा ॥
भगणाः पञ्च विज्ञेया मङ्गलाख्ये पदं प्रति ॥ ९६ ॥

---

88c. B. प्रकासक— 89. B. लक्षणां 91a. B. मदनी नंदनी
91b. B. नतो 91c. B. मदनी c2a. B. वृंदाविनी
95c. B. कौञ्चपदं 96a. B. घोट— 96c. B. विलम्बिततये

**॥ इति मङ्गलः ॥**

रेचितो यस्तु गद्येन पद्येनापि द्वयेन वा ।
सस्वरो मङ्गलाचारो निःसारुकैशिकीयुतः ॥ ९७ ॥

**॥ इति मङ्गलाचारः ॥**

नन्द्यावर्तः स्वस्तिकश्चेत्युभौ रागकदम्बकौ ।
आद्यो वृत्तैश्चतुर्भिः स्यात्ताले रागैश्च भूषितः ॥ ९८ ॥
उद्ग्राहेण भवेन्न्यासस्तालमानद्वयेन वा ॥ ९९ ॥
नन्द्यावर्त्तो भवेदेवं गद्येनाऽप्यपरे जगुः ।
स्वस्तिको द्विगुणः प्रोक्तः शेषमन्यच्च पूर्ववत् ॥ १०० ॥

**॥ इति रागकदम्बकः ॥**

सतालस्तेनकैर्गेयो युक्तो द्वित्रिचतुष्पदैः ।
नन्दाभिधः प्रबन्धोऽयं वी[24ᵃ]-णावाद्यमनोहरः ॥ १०१ ॥

**॥ इति नन्दः ॥**

यस्योद्ग्राहादयः सर्वे शृङ्गाराद्यै रसैर्युताः ।
समस्तैरसमस्तैश्च रससन्दोहलक्षणम् ॥ १०२ ॥

**॥ इति रससन्दोहः ॥**

कर्तव्यः प्रथमं प्राज्ञैरालापस्तालवर्जितः ।
चच्चत्पुटेन गातव्यं पृथग् द्विः पदपञ्चकम् ॥ १०३ ॥
तत्तालेनैव संयुक्ताः स्वराः पाटास्ततः परम् ॥
द्विचच्चत्पुटमानेन पाटैः पटहसम्भवैः ॥ १०४ ॥
अन्तरा क्रियते पश्चाद् द्वितीयं पदपञ्चकम् ।
गेयं चाचपुटाख्येन पूर्ववद्गीतकोविदैः ॥ १०५ ॥
ततस्तेन स्वराः पाटास्तद्विमानेन चान्तरा ।
हुडुकसम्भवैः पाटैर्ग्रथितैर्गानतत्परैः॥ १०६ ॥

98ᵇ. B. उभो　　100ᶜ. B. स्वस्तिकः
103ᶜᵈ. B. चच्चत्पुटेमानेन पाटैः पटहगातव्यं पृथग् द्विः पदपञ्चकम् ॥ २० ॥
106ᵃ. B. पराः　　106ᶜ. B. हुडक्क

ततः प्रगीयते **प्राज्ञैः** षट्पितापुत्रकेण तु ।
विचित्राक्षरसंयुक्तं तृतीयं पदपञ्चकम् ॥ १०७ ॥

तेन स्वरादयस्तद्वत् शङ्खपाटैस्ततोऽन्तरा ।
सम्पक्केष्टाकतालेन गातव्यानि पदानि षट् ॥ १०८ ॥

तेनैव तालभेदेन स्वराः पाटाश्च पूर्ववत् ।
कांस्यतालोद्भवैः पाटैर्द्विर्मानेन ततोऽन्तरा ॥ १०९ ॥

उद्घट्टेन ततो गेयं पदषट्कं मनोरमम् ।
प्रोक्ताः प्राग्वत्स्वराः पाटाः पाटैर्मुरजसम्भवैः ॥ ११० ॥

अन्तरा पूर्ववत्पश्चादाभोगश्चाऽविलम्बितः ।
प्रबन्धनाम्ना संयुक्तो गायकस्य च मण्डितः ॥
उद्घट्टेन ततो यस्य नेतुर्नाम प्रगीयते ॥ १११ ॥

[24[b]] ततो माङ्गल्यवचनमालापे न्यासमादिशेत् ।
वीरशृङ्गारभेदाभ्यां प्रबन्धोऽयं द्विधा मतः ॥ ११२ ॥

वीरावतारो नाम्नैकः शृङ्गारतिलकोऽपरः ।
श्रीराग-कैशिकी-तोडी-नट्ट-शुद्धवराटिकाः ॥ ११३ ॥

वेलावली च हिन्दोला मालवश्रीरिति ध्रुवम् ।
[ एतेषु येन केनापि रागेणाऽसौ प्रगीयते ॥ ]
वीरशृङ्गारयोगेन प्रीयन्ते सर्वदेवताः ॥ ११४ ॥

## ॥ इति पञ्चतालेश्वरः ॥

गजलीलाख्यतालेन गजलीला निगद्यते ।
छन्दोहीनेतरलक्ष्म हयलीलागतं मतम् ॥ ११५ ॥

109[b]. B. पाटाःश्च — 109[c]. -द्भवौ पाटैः — 110[a]. B. उद्घटेन
110[d]. B. पाटैर्मुरज- — 111[a]. B. अंतरः — 111[b]. B. ओभोगस्तु वि-
111[d]. B. द्वयकारस्य — 111[ef]. म्रत्पानतु- — 112[b]. B. आलपि-
114[a]. B. वेलाकुली — 114[cd]. supplied from Saṅgītacūḍāmaṇi.
114[f]. B. प्रियंते

॥ इति गजलीला ॥

हयलीला द्विधा प्रोक्ता गद्यजा पद्यजा तथा
हयलीलेन तालेन पद्यजा स्याच्चतुर्विधा ॥ ११६ ॥

यत्र पूर्वार्धमार्यायाः सतालं परिगीयते ।
सतालमुत्तरार्धं तु हयलीला निगद्यते ॥ ११७ ॥

॥ इत्यश्वलीला ॥

चतुर्भिस्तालरागैः स्याच्छ्रीरङ्गोऽन्ते पदान्वितः ॥

॥ इति श्रीरङ्गः ॥

द्विधा तालार्णवो गद्यपद्याभ्यां भूरितालभाक् ॥ ११८ ॥

॥ इति तालार्णवः ॥

बिरुदान्तस्त्रिभिस्तालै रागैः सर्वाङ्गकः स्फुटम् ।
पार्वतीतिलकः प्रीत्यै पार्वतीवल्लभस्य च ॥ ११९ ॥

॥ इत्युमातिलकः ॥

पदैश्च बिरुदैर्हर्षवर्धनः स्वरपाटकैः ।

॥ इति हर्षवर्धनः ॥

अन्ते विभूषितः पादैः प्रश्नोत्तरपदान्वितः ।
ताल[ 25[a] ]-मानद्वयन्यासः प्रोच्यते शुकसारिकः ॥ १२० ॥

॥ इति शुकसारिकः ॥

मधुमाधवमल्हारभूपालीरागभूषितम् ।
खण्डत्रयं प्रगातव्यं षडङ्गं पदपूर्वकम् ॥ १२१ ॥

चित्रवर्णं स्वरप्रान्तं दिव्यभाषामनोहरम् ।
रसैस्तु वीरशृङ्गारकरुणाख्यैर्विराजितम् ॥ १२२ ॥

118[a]. B. चर्तुभिः स्ताल 118[b]. B. श्रीरंगो ते 119[c]. B. –तिलकं
120[c]. B. –षितं 120[d]. B. –न्वितं 120[e]. B. न्यासं
120[f]. B. –रिकं; after 120. B. ॥ इति……कम् ॥

नारायणविरञ्चीशयशसो वर्णनं क्रमात् ।
अनेनैव प्रकारेण श्रीकण्ठाख्यो भवेत्स्फुटम् ॥ १२३ ॥

**॥ इति श्रीकण्ठः ॥**

नवरत्नप्रबन्धोऽसौ नवखण्डैश्च मण्डितः ।
वर्णनं नवरत्नानां तावद्भिस्तालरागकैः ॥
षडङ्गान्यपि तत्र स्युर्नेतुर्नाम्ना विराजितः ॥ १२४ ॥

**॥ इति नवरत्नः ॥**

स्वरान्तः श्रीविलासः स्याद्रागैस्तालैस्तु पञ्चभिः ॥ १२५ ॥

**॥ इति श्रीविलासः ॥**

पदैश्च बिरुदैस्तेनैर्गीयते यः सुदर्शनः ॥ १२६ ॥

**॥ इति सुदर्शनः ॥**

खण्डैर्द्वादशभिः सूर्यप्रकाशः परिकीर्तितः ।
रागैस्तालैः स्वरैः पाटैर्बिरुदैस्तेनकैः पदैः ॥
सूर्यदेवस्तवैर्युक्तो गातृनेतृविभूषितः ॥ १२७ ॥

**॥ इति सूर्यप्रकाशः ॥**

खण्डैः षोडशभिश्चन्द्रप्रकाशश्चन्द्रवर्णनात् ।
वर्णनायां कलैकैका प्रतिखण्डं **मनीषिभिः** ॥
रागैः षोडशभिर्युक्तः षडङ्गो **धीमतां** मतः ॥ १२८ ॥

**॥ इति चन्द्रप्रकाशः ॥**

[ 25[b] ] गद्येन कलहंसः स्यात्स्वराः पूर्वं ततः पदम् ।
कलितो भजयैः **प्राज्ञैः** कलहंसो निगद्यते ॥ १२९ ॥

**॥ इति कलहंसः ॥**

**॥ इति जयमालादिप्रबन्धाः ॥**

वैदर्भी स्यात्तु पाञ्चाली लाटी गौडीति रीतयः ।
असमस्तैः पदै रीतिर्वैदर्भी **मुनिभिर्**मता ॥ १३० ॥

---

124[e]. B. षडांगांन्यपि  125[b]. B. रागिस्तालैस्तु  126[b]. B. च सुदर्शनम् after 126 B. ॥ इति .. ...म् ॥  127[c]. B. रागैः स्तालैः  129[c]. B. नभजयैः
130[a]. B. स्यातु  130[b]. B. लीटी

**॥ इति वैदर्भी ॥**

ससमासैः पदैर्द्वित्रैः पाञ्चाली रीतिरुच्यते ॥

**॥ इति पाञ्चाली ॥**

पदैः समाससंयुक्तैर्लाटी स्यात्पञ्चसप्तभिः ॥

**॥ इति लाटी ॥**

यथाशक्त्या भवेद्गौडी ससमासैः पदाक्षरैः ॥ १३१ ॥

**॥ इति गौडी ॥**

प्रोक्तः सूडो बुधैर्द्वेधा शुद्धश्छायालगस्तथा ।
एलादिः शुद्धसूडः स्याद् ध्रुवादिः सालगो मतः ॥ १३२ ॥

तत्र शुद्धः पुरा प्रोक्तः सालगस्त्वधुनोच्यते ।
ध्रुवस्तत्रादिमः प्रोक्तो मण्ठकप्रतिमण्ठकौ ॥ १३३ ॥

निःसारुकोऽड्डुतालश्च रासकश्चैकतालिका ।
इति सालगसूडस्थगीतानां परिसङ्ग्रहः ॥ १३४ ॥

विवेकेन विना ज्ञानं यथा भाति न कुत्रचित् ।
तथैव सर्वलोकेषु गानं नैव ध्रुवं विना ॥ १३५ ॥

न श्रद्धया विना दानं ध्यानमात्मरसं विना ।
प्राणेशं न विना नारी तथा गानं ध्रुवं विना ॥ १३६ ॥

यत्रोद्ग्राहे भवेत्खण्डद्वितयं समधातुकम् ।
तृतीयं किञ्चि[26a]-दुच्चं तु द्विवारं गीयते त्रयम् ॥ १३७ ॥

आभोगस्तु द्विखण्डः स्यात्प्रथमं तस्य खण्डकम् ।
तुल्यधातु द्विखण्डं च किञ्चिदुच्चं तृतीयकम् ॥ १३८ ॥

131f. B. पदोक्षरक्षरैः — 132b. B. शुद्धछाया- — 132c. B. -दि सूद्धसूडः स्या
132d. B. ध्रवादिः — 133b. B. अधुनौ- — 133d. B. मंडक
134a. B. -रुकोड्डु- — 135c. B. तथेव — 135d. B. गान
136b. B. ध्यानं अत्म- — 137a. B. यत्रौद्राहे — 137d. B. द्विर्वारं

उद्ग्राहस्यादिमे खण्डे न्यासः स्याद् ध्रुवकस्तु सः ।
एकैकाक्षरवृद्ध्या च खण्डादेकादशाक्षरात् ॥ १३९ ॥

षड्विंशत्यक्षरं यावद् भवन्ति षोडश ध्रुवाः ।
ध्रुवे षोडश भेदाः स्युः षड् भेदा मण्ठके तथा ॥ १४० ॥

चत्वारः प्रतिमण्ठेऽपि भेदाः षट् च निसारुके ।
अड्डताले षडेव स्युश्चतुर्धा राससंज्ञके ॥ १४१ ॥

एकताली त्रिधा वर्णनियमानियमाविह ।
उत्तमाधममध्याः स्युः षट्चतुःपञ्चभिः पदैः ॥ १४२ ॥

**मतङ्गादि**मतं वीक्ष्य कुर्वन्तु सादरं **बुधाः** ।
साकल्येन मया नोक्ता ग्रन्थविस्तरशङ्कया ॥ १४३ ॥

## ॥ इति सालगसूडः ॥

सुरागैः सुस्वरैर्युक्तं सुरसैः सुपदाक्षरैः ।
सुन्दरार्थैः स्वलङ्कारैरुत्तमं गीतमुच्यते ॥ १४४ ॥

**आचार्याः** सममिच्छन्ति गीतं व्यक्तं तु **पण्डिताः** ।
मधुरं ललनावर्गो विकृष्टमितरे जनाः ॥ १४५ ॥

उच्चनीचस्वरैर्युक्तं न द्रुतं न च लम्बितम् ।
पदैस्तालैः समं गीतं सममाचार्यवल्लभम् ॥ १४६ ॥

## ॥ इति समम् ॥

क्रियाकारकसंयुक्तं व्यक्तस्वरविराजितम् ।
सन्धिदोषपरित्यक्तं व्यक्तं तु पण्डितप्रियम् ॥ १४७ ॥

## ॥ इति व्यक्तम् ॥

[26b] श्राव्यं ध्वनिसमोपेतं ललितैरक्षरैर्युतम् ।
शृङ्गाररसशोभाढ्यं मधुरं युवतिप्रियम् ॥ १४८ ॥

139b. B. –कस्तु शः 139c. B. एकेका– 140a. B. यावत्
147d. B. प्रीयम् 148a. B. श्राव्यध्वनि– 148c. B. सोभाढ्यं

## ॥ इति मधुरम् ॥

युक्तं स्वरैरुच्चतरैः प्रयोगबहुलीकृतम् ।
विकृष्टं तद्बुधैः प्रोक्तमितरेषां मनोहरम् ॥ १४९ ॥

## ॥ इति विकृष्टम् ॥

लोकदुष्टं तथा शास्त्रदुष्टं कालविरोधि वा ।
ग्राम्यार्थकं कलाशून्यं पुनरुक्तं विवर्जयेत् ॥ १५० ॥

## [इति गीतदोषाः]

इति श्रीमन्नाट्यशास्त्रे श्रीकण्ठकविविरचितायां रसकौमुद्यां पूर्वखण्डे प्रबन्धाध्यायो नाम तृतीयः ॥ ३ ॥

---

149[d]. B. इवरेषा; after 149. B. विकृष्टाम् ॥ 150[c]. B. बलाशून्यं

## ॥ चतुर्थोऽध्यायः ॥

शक्रादयः किन्नरचारणानां गणाः प्रभोर्यस्य हरेः पुरस्तात् ।
गानादि कृत्वा किल चक्रुरन्तर्मुदोऽवतान्नो यमुनावनौ सः ॥ १

अध्याये विविधं वाद्यं चतुर्थे सादरं मया ।
यत्यादयः प्रबन्धाश्च तालाङ्गनिचयः क्रमात् ॥ २ ॥

**रम्भाऽर्जुनमतङ्गादि**शास्त्रं संवीक्ष्य सादरम् ।
लक्ष्यलक्षणसंयुक्तं वाद्यमद्य निगद्यते ॥ ३ ॥

गीतं नृत्यं च वाद्येन शोभां धत्ते यतो भृशम् ।
देवयात्राविवाहादौ वाद्यमादौ प्रयुज्यते ॥ ४ ॥

चतुर्भेदमिदं वाद्यं वदन्ति **भरतादयः** ।
ततं तथाऽवनद्धं च घनं सुषिरमेव च ॥ ५ ॥

ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् ।
घनं तु कांस्यतालादि वंशादि सुषिरं म[27a]-तम् ॥ ६ ॥

यन्त्रतन्त्रीविभेदेन मया प्रोक्तं पुरातनम् ।
इदानीमवनद्धादि प्रोच्यते **कृपया गुरोः** ॥ ७ ॥

मृदङ्गः पटहो भेरी हुडुक्का करटा तथा ।
निःसाणो दुन्दुभी रुञ्जा त्रिवलिः सेलुका तथा ॥ ८ ॥

डक्कुली डमरुर्डक्का ढक्का टवस एव च ।
अन्येऽवनद्धभेदाः स्युर्भूरयोऽपि भुवस्तले ॥ ९ ॥

तेषामपि समुद्दिष्टः श्रेष्ठस्तु मुरजो **बुधैः** ।
ततस्तस्यैव कथ्यन्ते सलक्ष्यलक्षणानि च ॥ १० ॥

निर्दोषबीजवृक्षोत्थो मृदङ्गः परिकीर्तितः ।
रक्तचन्दनजो यद्वा खादिरो वाऽथ चाम्पकः ॥ ११ ॥

1a. B. किंनर, 1b. B. गणाप्रः, हरोः 1c. B. कृत्यं 5d–6d. B. शुषिरं
6b. B. आनर्दम् 8c. B. डुंडुभिः 9b. B. टक्का 10a. B. समुद्दिष्टः

*पिण्डमर्धाङ्गुलं तस्य पृथुमध्यं मनोहरम् ।*
अङ्गुलैरेकविंशत्या दैर्घ्ये मानमुदाहृतम् ॥ १२ ॥

चतुर्दशाङ्गुलानि स्युर्वामास्ये, तु त्रयोदश ।
दक्षिणास्ये, द्वयोश्चर्म देयमेकाङ्गुलाधिकम् ॥ १३ ॥

चत्वारिंशत्सुरन्ध्राणि त्वङ्गुलव्यवधानतः ।
कार्यो गोमूत्रिकाबन्धो रन्ध्रेषु प्रोतवध्रकैः ॥ १४ ॥

भृशं दृढाय मध्यं तु त्रिभिर्बन्धैस्तु बन्धयेत् ।
कुण्डलीद्वितयं प्रान्ते कृत्वा कच्छानि बन्धयेत् ॥ १५ ॥

मुखं विलेपयेद्वामं भक्तमिश्रेण भस्मना ।
दक्षिणं बोहणाख्येन कट्यां न्यसेत्सुवाससा ॥ १६ ॥

सम्यङ्निष्पादितो धीरैर्गम्भीरं तनुते ध्वनिम् ।
त्रिंशदङ्गुलदीर्घो वा पिण्डस्त्व[27b]-ङ्गुलसम्मितः ॥ १७ ॥

कार्यं वामाऽऽननं तस्य द्वादशाङ्गुलमानतः ।
दक्षिणं तु मितं सार्धैरेकादशभिरङ्गुलैः ॥ १८ ॥

**श्रीकण्ठेन** समुद्दिष्टा देवता जगदीश्वरः ।
पाटाश्च तद्धि थो टें हें नं देमित्यत्र केवलाः ॥ १९ ॥

अत्यन्तत्वरितस्फुरत्करयुगो वाद्ये प्रवीणोऽखिले
वर्णव्यक्तिपरायणो यतिलयाभिज्ञः सुरेखः सुधीः ।
पाटोद्धट्टनतत्परः श्रमजयो मोक्षेऽपि दक्षो ग्रहे
श्रोतुर्मानसरञ्जको भुवि मतो मार्दङ्गिको नान्यथा ॥ २० ॥

॥ **इति मार्दङ्गिकः** ॥

॥ **इति मृदङ्गः** ॥

12[b]. B. मनोहरम् 14[a]. B. सुरंध्राणि 14[c]. B. **कार्यो**
14[d]. B. बध्रकैः 17[a]. B. सम्यग् 18[a]. B. वाममननम्
19[cd]. B. तद्धिथोढने हेंदे– 20[a]. B. त्वरिस्फुरत् 20[d]. B. मार्दको

अपञ्चमकवर्गाख्यष्टतवर्गौ जझौ मलौ ।
रहाविति च वर्णानां विंशतिः पाटसंज्ञका ॥ २१ ॥
सस्वराः सस्वरैर्नानास्तेऽपि स्युः क्रमव्युत्क्रमात् ।
त्रिधा पाटाः पुनर्मिश्रकूटखण्डविभेदतः ॥ २२ ॥
मृदङ्गे थौं धलां भेर्यां भवेड्डुमरुके डमम् ।
पटहे दं त्रिवल्यां दों घटे घडविभेदतः ॥ २३ ॥
ढवे ढिढे च ढक्कायां शङ्खे धुं धिं च सेलुके ।
रुञ्जौ रुं डुं च डक्कुल्यां तुंतकौ घनतालके ॥ २४ ॥
करटायां तु टेमित्थमुत्कृष्टाक्षरयोजना ।
समानाः सर्ववाद्येषु शेषाः पाटा यथोचिताः ॥ २५ ॥

## ॥ इति पाटाः ॥

कोणाहतश्च सम्भ्रान्तो विषमाऽर्धसमाविति ।
चत्वारो हस्त[ 28[1] ]-पाटाः स्युर्**नन्दिकेश्वर**भाषिताः ॥ २६ ॥
कनिष्ठाङ्गुष्ठयोर्योगाच्छेषाङ्गुलिविवर्तनात् ।
कोणाहतो हस्तपाटो **विष्णुभक्तो**दितो यथा ॥ २७ ॥
' खुंखुंधरि खुंखुंधरि करगिट करगिट '

## ॥ इति कोणाहतः ॥

सर्वाङ्गुल्यग्रघातश्च सर्वाङ्गुलिविवर्तनम् ।
यस्य निष्पादकं सोऽत्र सम्भ्रान्तः कथितो यथा ॥ २८ ॥
' दरगिड दरगिड गिरिगिडद दाणकिट मटटकु '

## ॥ इति सम्भ्रान्तः ॥

पताककम्पनं यत्र चलनं मणिबन्धतः ।

---

21[d]. B. संज्ञकाः 23[b]. B. भवे डुंमरुके 23[c]. B. पटहें
23[d]. B. -घुघड- 23[d]. B. -तः ॥ शेथगुं ॥ २२ ॥ 24[b]. B. शंखेधुं
24[c]. B. डकुल्यां 26[d]. B. नंदके— 27[ab]. B. अं ुष्ठयोगाच्छेषां—
27[d]. B. विष्णुर्भक्तोर्दितः 28[c]. B. निःपादकंपोत्र; after 28 B. दरगिड दरगिड दरिगिडद दोणकिट मटटकु

पादकम्पोऽथ जनकः कथितो विषमो यथा ॥ २९ ॥

' दद्दें दद्दें खुंखुं दद्दें खुंखुं दद्दें ततकि ततकि '

**॥ इति विषमः ॥**

पूर्वलक्ष्मविपर्यासाद्भवेदर्धसमो यथा ॥ ३० ॥

' ददगिद गिगिरिकिटदगि थोंथोंगिदथोंगिद '

**॥ इत्यर्धसमः ॥**

**॥ इति नन्दिकेश्वरोक्ताश्चत्वारो हस्तपाटाः ॥**

उत्फुल्लः खलकस्तद्वत् पाण्यन्तरनिकुट्टकः ।
दण्डहस्तः पिण्डहस्तो युगहस्तोर्ध्वहस्तकौ ॥ ३१ ॥

स्थूलहस्तोऽर्धार्धपाणिः पार्श्वपाण्यर्धपाण्यपि ।
कर्तरीसमकर्तर्यौ ततो विषमकर्तरी ॥ ३२ ॥

समपाणिश्च विषमपाणिः स्यात्पाणिहस्तकः ।
नागबन्धोऽप्यवघटः स्वस्तिकश्च समग्रहः ॥ ३३ ॥

इत्येकविंशतिर्हस्तपाटाः स्युरवनद्धगाः ।
अलपद्मनखाघातादुत्फुल्लाख्यो भवेद्यथा ॥ ३४ ॥

' कद्दें कद्दें '

**॥ इत्युत्फुल्लः ॥**

यदा प्रसारिताङ्गुष्ठः शुकतुण्डस्य हन्यते ।
विरलाङ्गुलिभिर्वाद्यं क्रमशः खलकस्तथा ॥ ३५ ॥

' दांगि[ 28b ]-ड गिडद गिदा '

**॥ इति खलकः ॥**

तर्जन्यङ्गुष्ठघातेन करस्य दक्षिणस्य यः ।

After 29 B. दद्दें दद्दें खुंखुं दद्दें ततकिकि; after 30 B. ददगिद गगिरिगिड दगि देथों गिथों गिद 31a. B. तद्वन् 31b. B. निकुदकः 33d. B. स्वस्तिकश्च
34b. B. अवनद्वगाः; after 34 B. कद्दे कद्दे
35c. B. अंगुलीभिः; after 35 B. दागिड-गिडदगिंदी खलकः

क्रमव्युत्क्रमघातात्तु वामहस्तेन रेफवत्

तं **मतङ्गादयः** प्राहुः पाण्यन्तरनिकुट्टकम् ॥ ३६ ॥

[ 'दगिडदां खरिकदां खरिक खरिकदांदां खरिखरिदां गिडदां' ]

**॥ इति पाण्यन्तरनिकुट्टकः ॥**

ऊर्ध्वघातं पताकेन कृत्वैकमथ रेफतः ।

कृतौ यत्रोर्ध्वघातौ द्वौ दण्डहस्तो भवेदसौ ॥ ३७ ॥

[ 'दातरिकिटदां खरिखरिदां' ]

**॥ इति दण्डहस्तः ॥**

क्रमाद्रेफोर्ध्वहस्ताभ्यां पिण्डहस्तः प्रजायते ॥ ३८ ॥

'थरिकिटझें थरिकिटझें'

**॥ इति पिण्डहस्तः ॥**

क्रियते पाटनिष्पत्या ऊर्ध्वघातद्वयं पृथक् ।

रेफात्मभ्यां कराभ्यां चेद्युगहस्तस्तदा मतः ॥ ३९ ॥

[ 'द्रें द्रें दां दां' ]

**॥ इति युगहस्तः ॥**

दक्षिणेन तलेनोग्रघाते चैवोर्ध्वहस्तकः ॥ ४० ॥

यथा—गिड गिड दां दां दां

**॥ इत्यूर्ध्वहस्तः ॥**

हन्यते तलहस्तेन विधायोर्ध्वहतिद्वयम् ।

यदा वाद्यपुटद्वन्द्वं स्थूलहस्तस्तदा भवेत् ॥ ४१ ॥

---

36[d]. B. नेफवत्; after 36 दगिडदां......etc. not found in B; supplied from Ratnākara.
After 37 दातारिकिटदां.....etc. not found in B; supplied from Ratnākara; after 38 B. थकिटझे थकिटझे

39[c]. B. रेषात्मभ्यां; after 39 द्रें द्रें दां दां not found in B; supplied from Ratnākara.

40[b]. B. घाते द्वयपृथक्रेफात्मनैवो–; after 40 B. गिरगिड दां दां दां इत्युर्ध्व–

41[b]. B. हतिद्वय 41[c]. B. दावाद्य- 41[d]. B. तथा

यथा 'खुंखुंद खुंखुंद'

**॥ इति स्थूलहस्तः ॥**

अर्धार्धपाणिः करयोरर्धाभ्यां ताडनाद्भवेत् ॥ ४२ ॥

['खुदां खुदां']

**॥ इत्यर्धार्धपाणिः ॥**

पार्श्वपाणिर्मतः **प्राज्ञै**र्नखराग्रेण वादनात् ।

['थरगिड दागिड दगिड दगिड']

**॥ इति पार्श्वपाणिः ॥**

अर्धपाणिर्मतश्चैककराग्रकृतताडनात् ॥ ४३

['दगिड दगिड दरगिड दरगिड']

**॥ इत्यर्धपाणिः ॥**

वामहस्ताङ्गुलीनां तु कर्तरी स्यात्प्रचालनात् ॥ ४४ ॥

'टि [29a]-रि टिरि टिरिकिटथों दिगिदां तिरि टिरि किटझेंझें तकिकिट'

**॥ इति कर्तरी ॥**

कर्तरीभ्यां समं घातः कराभ्यां समकर्तरी ॥

['झिंनकिट कनकिट किटझेंथों दिगिद तिरिटि तिरिटिकि']

**॥ इति समकर्तरी ॥**

क्रमतस्ताडना द्वाभ्यां भवेद्विषमकर्तरी ॥ ४५ ॥

['टिरि टिरिथों दिगिद टिरि टिरी किद']

**॥ इति विषमकर्तरी ॥**

After 42 'खुदां खुदां' supplied from Ratnākara.
After 43$^{ab}$. थरगिड...etc. supplied from Ratnākara.
After 43$^{cd}$. दगिड.... etc. supplied from Ratnākara.
After 44 B 'तिरि टिरि टि किटथों डिगिद तिरिटिरि किट झें झें तकिट' इति कर्तरीः ॥१२॥
After 45$^{ab}$. झिनकिट...etc. supplied from Ratnākara.
After 45$^{cd}$. टिरि टिरि....etc. supplied from Ratnākara.

पीडयेतां पुटद्वन्द्वं युगपद्धस्तयोर्यदा ।
अङ्गुष्ठाऽङ्गुलिसङ्घातौ समपाणिस्तदा मतः ॥ ४६ ॥

[ ' दां गिडगिड दां दां ' ]

**॥ इति समपाणिः ॥**

व्यत्ययाद् व्यापृतौ हस्तौ साङ्गुष्ठाङ्गुलिभिः क्रमात् ।
असौ विषमपाण्याख्यः प्रोच्यते गुरुभिर्मम ॥ ४७ ॥

[ ' दां दां गिड गिड दां दां ' ]

**॥ इति विषमपाणिः ॥**

समपाणेः प्रविरलाङ्गुलित्वे पाणिहस्तकः ॥ ४८ ॥

[ ' तरगिड दरगिड ' ]

**॥ इति पाणिहस्तः ॥**

नागबन्धो विपर्यासात् पुटयोः करघाततः ।
प्रत्येकं वा पुटद्वन्द्वे कराभ्यां ताडनाद्द्वयम् ॥ ४९ ॥

[ टन गिन गिन गिनन गिडगिड गगि ]

**॥ इति नागबन्धः ॥**

हत्वा तलेन प्रहरेत् साङ्गुष्ठाङ्गुलिभिः क्रमात् ।
पुटमेकैकपाणिश्चेद्भवेदवघटस्तदा ॥ ५० ॥

[ ' ततगिड गिड दगिटन गिनगिननगि ' ]

**॥ इत्यवघटः ॥**

पुटमेकं निहन्यातां स्वस्तिके स्वस्तिकौ करौ ।

[ ' तकिट तकिटतकि ' ]

---

46c. B. अंगुली–; after 46 दां गिड etc. supplied from Ratnākara.
47b. B. -अंगुलीभिः 47c. B. विषमण्याख्यः
After 47. दां दां etc. supplied from Ratnākara.
After 48. तरगिड...etc. supplied from Ratnākara.
49a. B. विपर्यासान्; after 49 टनगिन...etc. supplied from Kumbha
50b. B. -अङ्गुलिः क्रमात्; after 50 ततगिड etc. supplied from Ratnākara.

**॥ इति स्वस्तिकः ॥**

समं करतलाभ्यां तु पुटघातात्समग्रहः ॥ ५१ ॥

[ ' तकिट किटतक ' ]

**॥ इति समग्रहः ॥**

**॥ इत्येकविंशतिर्हस्तपाटाः ॥**

रेफश्च भ्रमरः पाण्यन्तरोऽथ दण्डहस्तकः ।
**श्रीकण्ठेन** समुद्दिष्टं परं पाटचतुष्टयम् ॥ ५२ ॥
रेफः स्यात् स्कन्धसञ्चेन समस्तांऽ [ 29b ]-गुलिघाततः ॥

**॥ इति रेफः ॥**

भ्रमरः **सूरिभिः** प्रोक्तः समस्ताङ्गुलिताडनात् ॥ ५३ ॥

**॥ इति भ्रमरः ॥**

व्यङ्गुष्ठो दक्षिणो हस्तो मुहुश्चेत्ताडयेत्पुटम् ।
स्वपुटं पीडयेद्वामस्तदा पाण्यन्तरो भवेत् ॥ ५४ ॥

**॥ इति पाण्यन्तरः ॥**

परिघट्टनमङ्गुष्ठादङ्गुल्याग्रैश्च पीडने ।
वामेन पीडनाद्वाद्ये दण्डहस्तो भवेदसौ ॥ ५५ ॥

**॥ इति दण्डहस्तः ॥**

भवन्ति हस्तपाटानामन्ये भेदास्तु भूरयः ।
कल्पनीया यथेष्टं ते स्वधिया सुधीभिः सदा ॥ ५६ ॥

**॥ इत्येकोनत्रिंशद्धस्तपाटाः ॥**

अथ यत्यादयः केचित् प्रबन्धा **गुरुणो**दिताः ।

---

After 51ab. तकिट etc. supplied from Ratnākara.
After 51 cd. तकिट etc. supplied from Ratnākara.
After 53ab. B. ॥ रेफः ॥
55c. B. वाद्ये

कथ्यन्ते क्रमशस्तेऽपि स्मरणाय **गुरोर्मुहुः** ॥
उद्ग्राहादिनिबद्धाः स्युस्तेऽपि गीतप्रबन्धवत् ॥ ५७ ॥

यतिरेता च गजरो व्यापकश्रुतिभूषणः ।
पाटचालिस्तथा रुद्रभूषणः क्रमशो मताः ॥ ५८ ॥

कूटवर्णैरेकरूपै रचितोऽतिमनोहरः ।
विरामैरभिरामैश्च बहुभिश्छन्दसोज्ज्वलः ॥
यो वाद्यते वाद्यखण्डो यतिरित्यभिधीयते ॥ ५९ ॥

**॥ इति यतिः ॥**

बद्धस्तथा गदैर्हेन यतिश्छलिवटिर्भवेत् ॥ ६० ॥

वाद्यगीतप्रबन्धादौ क्वापि त्वङ्गतया यदा ।
**तद्विदो** वादयन्त्येनां वदन्त्युटवणं तदा ॥ ६१ ॥

**परे** पिलुमुरुं प्राहुरन्त्यथोंकारभूषितम् ।
तस्मि[ 30[a] ]न्प्रौढत्वमापन्ने कैगुरुः कथ्यते जनैः ।
यदा पिलुमुरुर्नाल्पो न प्रौढोऽपि कलासकः ॥ ६२ ॥

प्रबन्धे बहवो भेदा विहिताः स्वेच्छयाऽपरे ।
तत्तत्तालाभिधाः सर्वे **बुधैरप्यूह्यतां** धिया ॥ ६३ ॥

**॥ इति यतिप्रमुखाः ॥**

उद्ग्राहो द्विस्ततः खण्डं यस्यां द्विर्भूरिवाद्यकम् ।
तत्किञ्चिदधिकं वारे द्वितीयेऽथ तृतीयकम् ॥ ६४ ॥

कियद्दीर्घं सकृत्तच्च कैश्चित्पाटैर्विमिश्रितम् ।
प्रयोक्तव्यं ततो दीर्घखण्डं वर्णसरात्मकम् ॥ ६५ ॥

---

58[a]. B. येति 58[b]. B. व्यापकः 58[d]. B. रुद्रः
59[d]. B. बहुभिः छन्दसोज्वलः
60[b]. B. यतिश्च तिवटिः 61[d]. B. अत्पुटवणम्
62[a]. B. पिलुनुद्र 62[c]. B. प्रोढत्व- 62[e]. B. पिलुमुरुनाल्यो
63[a]. B. भेदो 63[b]. B. स्वछया 63[d]. B. उह्यताम्

ततोऽल्पं बहुपाटाढ्यं ततोऽन्ते छण्डणो भवेत् ।
उद्धतो ध्वनिरत्र स्यात्प्रायो मानं विलम्बितम् ॥
ओता सोक्ता **परे** प्राहुः खण्डचालिं मनोहराम् ॥ ६६ ॥

**॥ इत्योता ॥**

कृत्वैकवारमुद्ग्राहं नातिदीर्घो न चाल्पकः ।
वादकोद्घोषगम्भीरध्वनिमुच्चतरं दधत् ॥ ६७ ॥

त्रिः खण्डोऽभ्यस्यते कूटैर्बन्धश्चोपशमाभिधः ।
शुद्धकूटादिभिर्बद्धः सुकुमाराक्षरान्वितः ॥ ६८ ॥

अल्पकोमलतावाद्यो भवेन्मुहुस्ततः परम् ।
कूटादिबद्धः खण्डः स्याच्छण्डणो यत्र रज्यते ॥
गजराख्यो भवे**दन्ये** प्राहुरालापचालिकाम् ॥ ६९ ॥

गजरावयवाः सर्वे वाद्यन्ते ते निरन्तराः ।
वाद्यभेदाश्रिताः सर्वे प्रबन्धा गजरादयः ॥ ७० ॥

**॥ इति गजरः ॥**

दश खण्डान् विधा[ $30_b$ ]-याऽऽदौ भिन्नभिन्नसुवाद्यकान् ।
शेखराख्यो भवेद्वाद्यो रञ्जको भिन्नपाटकः ॥ ७१ ॥

एकपाटस्तु खण्डानां दशानामन्ततो भवेत् ।
विलम्बितलयोऽप्यत्र ततो मध्यलयात्मकौ ॥ ७२ ॥

यमलाभिधकौ खण्डौ स्यातां द्वौ भिन्नवाद्यकौ ।
पूर्ववच्चैतयोरन्ते शेखरं सम्प्रयोजयेत् ॥ ७३ ॥

ततः प्राग् दशखण्डानां पृथग्भावचतुष्टयम् ।
प्रत्येकं तु द्विरभ्यस्तं सकृद्वा पुनरुच्चरेत् ॥ ७४ ॥

66[c]. B. उद्गतो 66[e]. B. तुता
67[a]. B. कृत्वेक- 68[a]. B. त्रिखण्डः, कूटे
69[a]. B. -कोमलतादाद्यो 70[b]. B. ये निरंतराः
74[d]. B. पुनश्चरेत्

शेखरं त्वन्ततो युञ्ज्यात् पूर्ववन्मध्यमो लयः ।
कलशाख्यं ततः खण्डं शुद्धपाटविमिश्रितम् ॥ ७५ ॥

धीगतं भूरिवाद्याढ्यं कुर्याद् द्रुतलयात्मकम् ।
सर्वत्र स्वेप्सितस्ताल एक एव प्रकीर्तितः ॥ ७६ ॥

तदेनं **मुनयः** प्राहुर्व्यापकश्रुतिभूषणम् ।
ताण्डिकाव्याप्तिमित्याहुः **श्रीकर्णाटकभूषणाः** ॥ ७७ ॥

**॥ इति व्यापकश्रुतिभूषणः ॥**

पाटवर्णादयोऽष्टादित्र्यन्ताः संवादिनो युताः ।
षट्खण्डास्ते स्युरत्रैकमेकं प्रत्येकविंशतिः ॥ ७८ ॥

तत्तत्संख्यात्मिका वर्णा मालावैचित्र्यसंयुताः ।
नानावाद्यान्विता रासतालयुक्ता भवेत्ततः ॥ ७९ ॥

अनेकवाद्यसम्पन्नो बहुभङ्गिविचित्रितः ।
कलशश्चचरीयु[ 31[a] ]-क्तः स्याच्च तां पाटचालिकाम् ।
**पुण्डरीकादयः** प्राहुः, शब्दचालिं **परे**ऽपि च ॥ ८० ॥

**॥ इति पाटचालिः ॥**

यथा पृथक् पृथक् वाद्यनवखण्डान् सुरञ्जकान् ।
नातिह्रस्वान् न दीर्घांश्च कृत्वा सम्यक् ततोऽपरम् ॥ ८१ ॥

ह्रस्वखण्डं पृथग्वाद्यं रक्तं यत्पल्लवाभिधम् ।
एवं तु प्रतिखण्डान्ते योजयेच्च ततः परम् ॥ ८२ ॥

विचित्रवाद्यसम्पन्नं दीर्घं कलशखण्डकम् ।
अन्ते कुर्यात् तदा चाहु**र्मुनयो** रुद्रभूषणम् ॥ ८३ ॥

75[a]. B. युंज्यांत- 75[c]. B. कलसाख्यं 76.[c]. B. स्वेत्सितः
78.[c]. B. षट्खंडा स्युः 78 पाटवर्णादयोऽष्टाद्या अन्तास्संवादिनो कृताः ।
षट्खण्डास्ते स्युरत्रैकमेकं प्रत्येकविंशति ॥ भरतकोश p. 362[b].
80[b]. B. विचित्रतः 80[c]. B. केलस-
83[a]. B. संपन्नदीर्घम् 83[c]. B. कुर्या तदाहुः

तमेव ताण्डिकां सर्वे दलशृङ्गारकं जगुः ।
स्रोतोवहा यतिश्चात्र तालस्तु प्रेप्सितो मतः ॥ ८४ ॥

[॥ इति रुद्रभूषणः ॥]

॥ इत्यवनद्धवाद्यभेदाः ॥

अधुनैव घनं वाद्यं समाचष्टे यथामति ।
[ तालोऽथ पट्टः शुक्तिश्च ] कांस्यतालश्च झल्लरी ॥ ८५ ॥
घण्टा च [ जयघण्टा च ] कम्रा च क्षुद्रघण्टिका ।
सर्वेषां घनवाद्यानां तालो मुख्यः प्रतिष्ठितः ॥ ८६ ॥
यतस्तूर्यत्रयं तालकालमानानुगं भवेत् ।
तेनैव प्रोच्यते काललक्ष्यलक्षणमुत्तमम् ॥ ८७ ॥
शुद्धकांस्योद्भवं कुर्यात्तालयुग्मं समुज्ज्वलम् ।
वर्तुलं सुस्वरं शक्तिशिवरूपं प्रकीर्तितम् ॥ ८८ ॥
मध्ये निम्नं भवेदास्ये त्र्यङ्गुलं द्व्यङ्गुलं तले ।
अङ्गुलद्वयविस्तीर्णं विवरं रक्तिकासमम् ॥ ८९ ॥
पिण्डे यवप्र [$31^b$]-मं प्रोक्तमित्थं तद्दर्शितं बुधैः ।
प्रोतप्रोल्लसत्प्रान्तकौशेयाम्बररञ्जितम् ॥ ९० ॥
वामेन धारयेच्छक्तिं शिवं दक्षिणपाणिना ।
शिवेन ताडयेच्छक्तिं न तु शक्त्या शिवं क्वचित् ॥ ९१ ॥
अल्पध्वनिर्भवेच्छक्तिः शिवो भूरिध्वनिर्भवेत् ।
शक्तौ लक्ष्मीः शिवे विष्णुर्देवताऽत्र बुधैर्मता ॥
अश्वमेधफलप्राप्तिर्हरेरग्रे निवेदनात् ॥ ९२ ॥

$84^a$. B. तमेवं $84^c$.B. श्रोतो–
after 84 B. does not give इति रुद्रभूषणः
$85^c$. $86^a$. reconstructed spoiled letters shown by brackets.
$86^{ab}$. B. घंटा च कम्रा च क्षद्र–
$87^b$. B. -मानातुगं $87^c$. B. तेतैव प्रोच्येते
$88^a$. B. -कांम्यो– $90^a$. B. पिंडयवप्रमं $90^b$. B. तदर्शितं
$91^{ac}$. B. छक्ति $91^d$. B. ननु $92^a$. B. भवेछक्तिः

## ॥ इति तालनिष्पत्तिः ॥

मनोज्ञरूपो दशसञ्चदक्षो जितश्रमः पाटपटुर्लयज्ञः ।
न्यासे ग्रहे वा निपुणो यतौ स्यात् तालेऽतिमुग्धः किल तालधर्ता ॥ ९३ ॥

## ॥ इति तालधर्तृगुणाः ॥

तालः स्यात् क्रियया कालमानः स च द्विधा मतः ।
मार्गदेशीविभेदेन तत्र प्राणा दश क्रमात् ॥ ९४ ॥

कालो मार्गक्रियाङ्गानि ग्रहो जातिः कला लयः ।
यतिः प्रस्तार इत्युक्तास्ताले प्राणा दश क्रमात् ॥ ९५ ॥

श्री**मद्विठ्ठलदेवस्य** प्रसादाच्च **गुरो**र्मया ।
**श्रीकण्ठेनो**च्यते कामं तालकालादिनिर्णयः ॥ ९६ ॥

पद्मपत्रशते सूचीभेदात्कालः क्षणः स्मृतः ।
अष्टक्षणैर्लवः ख्यातः काष्ठा स्यादष्टभिर्लवैः ॥ ९७ ॥

स्यान्निमेषोऽष्टकाष्ठाभिर्निमेषैरष्टभिः कला ।
कलाद्वयाच्चतुर्भागः स एव प्रोच्यते त्रुटिः ॥ ९८ ॥

चतुर्भागद्वयेनैव बिन्दोरर्धं प्रकीर्तितम् ।
[ अर्धबिन्दुद्वयेनैव तथाणुश्च प्रकीर्तितः ॥ ९९ ॥ ]

अणुद्वयाद् द्रुतः प्रोक्तो द्रुताभ्यां जायते लघुः ।
लघुद्वयाद्गुरुर्ज्ञेयो लत्रयेण प्लुतः स्मृ[ 32a ]-तः ॥ १०० ॥

इत्थं कालगतिः प्रोक्ता **कालज्ञैः पूर्वसूरिभिः** ।
तालाऽभ्यासक्रियाभ्यां तु कालज्ञानं प्रजायते ॥ १०१ ॥

## ॥ इति प्रथमः प्राणः ॥

93a. B. दशसंभ- 93b. B. जित: श्रमः
95b. B. जातिकलालयः 95c. B. यतिप्रस्तार इत्युक्ता
96a. B. श्रीगद्विदल- 96b. B. प्रासादात्
99cd. Seems to be missing in B; supplied by the editor.
100a. B. द्वया द्रुतः 100c. B. द्वया गुरुः 101b. B. पूर्वसूरिः

मार्गाः स्युस्तत्र चत्वारो ध्रुवश्चित्रश्च वार्तिकः ।
दक्षिणश्चेति तत्र स्यात् ध्रुवके मात्रिका कला ॥ १०२ ॥
शेषेषु द्वे चतस्रोऽष्टौ क्रमान्मात्राः कला भवेत् ।
ध्रुवका पतिता चित्रे वार्तिको त्वादिमे उभे ॥
द्वे चान्तेऽपि प्रयोक्तव्ये क्रमादष्टौ च दक्षिणे ॥ १०३ ॥

## ॥ इति द्वितीयः प्राणः ॥

क्रिया तत्र द्विधा प्रोक्ता निःशब्दा शब्दसंयुता ।
निःशब्दा तु चतुर्धोक्ता **मुनिभिर्भरतादिभिः** ॥ १०४ ॥
आवापस्तत्र निष्क्रामो विक्षेपाख्यः प्रवेशकः ।
क्रमादावापनिष्क्रामौ कनिष्ठाद्यङ्गुलीक्रमात् ॥ १०५ ॥
अग्राद्वक्षः समायातो वक्षसोऽग्रे विनिर्गतः ।
विक्षेपाख्यप्रवेशौ च तर्जनाद्यङ्गुलिक्रमात् ॥ १०६ ॥
हृदः स्वपार्श्वनिर्यातः स्वपार्श्वात् हृदमागतः ।
सशब्दाऽपि चतुर्धोक्ता **मतङ्गादिमुनीश्वरैः** ॥ १०७ ॥
ध्रुवः शम्पा ततस्तालः सन्निपात इति क्रमात् ।
ध्रुवः स्याद्धस्तसम्पातश्छोटिकाशब्दपूर्वकः ॥ १०८ ॥
शम्पा दक्षिणहस्तस्य तालो वामशयस्य च ।
उभयोः सन्निपातः स्यात् तासां मार्गवशा [ 32ᵇ ]न्मितिः ॥ १०९ ॥

## ॥ इति क्रिया ॥

## ॥ इति तृतीयः प्राणः ॥

अणुद्रुतो द्रुतश्चैव, दविरामो द्रुतो, लघुः ।
लविरामो गुरुश्चैव प्लुतश्चेति यथाक्रमम् ॥
ज्ञातव्यानि क्रमात्ताले सप्ताङ्गानि बुधैः सदा ॥ ११० ॥

104[c]. B. निःशब्दा नु
105[a]. B. आवायः 105[b]. B. विक्षेपपक्षप्रवेशकः 105[ac]. B. निःक्रामो
108[a]. B. संपा 108[c] B. ध्रुवस्याद्धससंपातः
109[a]. B. शंपा 109[c]. B. सन्निपातम् 109[d]. B. मीति
110[a]. B. अणुतौ 110[b]. B. सविरामो 110[c]. B. लोविरामो

चन्द्रशम्भू कुमारश्च देवजीवावुमापतिः ।
त्रयोऽच्युतादयः प्रोक्ता देवता मुनिभिः क्रमात् ॥ १११ ॥
तित्तिरश्चटकश्चैव बकचातककोकिलाः ।
वायसः कुक्कुटश्चैव क्रमादुच्चारयन्त्यमी ॥ ११२ ॥
अणुद्रुतश्चार्धद्रुतः कबिन्दुरर्धचन्द्रकः ।
अङ्कुशं च धनुःसंज्ञोऽणुः स्युर्नामान्यणुद्रुते ॥ ११३ ॥
बिन्दुकं व्यञ्जनं शून्यं द्रुतं खं चार्धमात्रकम् ।
सुवृत्तं वलयं व्योम द्रुते नामान्यनुक्रमात् ॥ ११४ ॥
व्यापकः सरलो ह्रस्वः शिरोदण्डो लघुस्तथा ।
लघोर्मेरुरिमाः संज्ञा मुनिभिः क्रमशो मताः ॥ ११५ ॥
वक्रो दीर्घो द्विमात्रः स्यात्पूज्यो गश्च कलाभिधः ।
केयूरो नूपुरो हारस्ताटङ्कः कङ्कणो गुरुः ॥ ११६ ॥
त्रिमात्रश्च प्लुतो दीप्तस्त्र्यङ्गं सामोद्भवं तथा ।
तारस्थानं तथा शृङ्गी प्लुते नामसमुच्चयम् ॥ ११७ ॥
अत्यल्पघातेऽणुर्ज्ञेयः सूक्ष्मघाते द्रुतो मतः ।
पूर्णघाते लघुर्ज्ञेयो घाताक्षेपो गुरुर्मतः ।
घातात्करभ्रमो यत्र प्लुतो ज्ञेयो विचक्षणैः ॥ ११८ ॥
पञ्चलघ्वक्षरो[ 33a ]च्चारमिता मात्रा निगद्यते ।
कल्पना गुरुलघ्वादेरनया मात्रया मता ॥ ११९ ॥
एकमात्रो लघुः प्रोक्तो द्विमात्रो गुरुरेव च ।
त्रिमात्रस्तु प्लुतो ज्ञेयो मात्रार्धं च द्रुतो मतः ॥
द्रुतार्द्धमणुरेवं स्यात्प्रमाणं मुनिसंमतम् ॥ १२० ॥

111b. B. उमापतिम् 111d. B. देवताः मु–
112a. B. तित्तिरटक– 114a. B. सून्यम् 114d. B. नामान्यनु
115c. B. इमां 116c. B. केयूरनूपुरो
118a. B. अल्पघाते 118c. B. घातत्
120 Written in top margin by the same hand.
120d. B. मातृर्द्धम्

द्रुते विरामेऽणुर्ज्ञेयो लविरामे द्रुतो मतः ।
द्रुतोपरि यदा रेखा दविरामः प्रकीर्त्तितः ॥ १२१ ॥
लघूपरि यदा मात्रा लविरामो भवेत्तदा ।
नामान्तराणि जायन्ते स्वाऽऽद्यवर्णैर्द्रुतादिषु ॥ १२२ ॥

**॥ इत्यङ्गानि ॥**

**॥ इति चतुर्थः प्राणः ॥**

ताले चत्वारि विज्ञेया ग्रहास्तूर्यविचक्षणैः ।
समोऽतीतोऽनागतश्च विषमश्च क्रमादिति ॥ १२३ ॥
[ गीतादिसमकाले तु ] घातो योऽसौ समग्रहः ।
गीतादौ विहिते पश्चादतीतस्तालघाततः ॥ १२४ ॥
अनागते तु प्राक् तालघातो गीतादिकस्ततः ।
विषमे नियमो नैव प्रान्ते चाद्ये बुधैर्मतः ॥ १२५ ॥

**॥ इति ग्रहाः ॥**

**॥ इति पञ्चमः प्राणः ॥**

चतुरस्रस्तथा त्र्यस्रः खण्डो मिश्रस्तथैव च ।
सङ्कीर्णाः पञ्च विज्ञेया जातयः क्रमशो बुधैः ॥ १२६ ॥
चतुस्त्रिपञ्चभिर्वर्णैः सप्तभिर्नवभिः क्रमात् ।
जातयः स्युः क्रमात्तद्वन्मात्राभिर्द्विगुणास्ततः ॥
द्वैद्विगुण्यं तु मात्राणां जातयश्च स्वयोनिवत् ॥ १२७ ॥

**॥ इति जातयः ॥**

**॥ इति षष्ठः प्राणः ॥***

after 122 B. चतुर्थप्राणः
123ᵇ. B. तुर्य- 123ᶜᵈ. B. समीतीतो नागतश्च क्रमादिति ।
124. torn in B., reconstructed by the editor.
after 125 B. इति ग्रह ॥ before 126 B ॥ पंचमप्राणः ॥
*after this some verses seem to be missing in B.
after 127 इति षष्ठः प्राणः not found in B.

…………………त्र लक्षणं प्रतिपाद्यते ।
आदिमध्यावसानेषु भवेदेकलयः समा ॥ १३५ ॥

आदौ स्थूल[ 33b ]-लयोऽन्यत्र सूक्ष्मः स्रोतोगता मता ।
स्रोतोगताविपर्यासाद्गोपुच्छा परिकीर्तिता ॥ १३६ ॥

मध्ये सूक्ष्मलया प्रान्ते स्थूला ज्ञेया पिपीलिका ।
पिपीलिकाविपर्यासान्मृदङ्गा यतिरुच्यते ॥ १३७ ॥

**॥ इति यतयः ॥**

**॥ इति नवमः प्राणः ॥**

प्रस्तारः प्रोच्यते प्राज्ञैरङ्गादिकविलेखनम् ॥ १३८ ॥

**॥ इति प्रस्तारः ॥**

**॥ इति दशमः प्राणः ॥**

तालश्चच्चत्पुटस्तावत् ततश्चाचपुटाभिधः ।
षट्पितापुत्रकश्चैव सम्पक्वेष्टाकसंज्ञकः ॥ १३९ ॥

उद्घट्टश्चेति विज्ञेया मार्गतालाः क्रमादमी ।
अथ देशीगतास्तालाः कथ्यन्ते कतिचिन्मया ॥ १४० ॥

आदितालो द्वितीयश्च तृतीयः प्रतिमण्ठकः ।
मण्ठरूपकझम्पाश्च ध्रुवोऽड्डुस्त्वेकतालिका ॥ १४१ ॥

ढेंक्युमातिलकौ कामो विष्णुर्ब्रह्मशिवौ जयः ।
चित्रनारायणौ लक्ष्मीर्गुरुर्गौरी कलध्वनिः ॥ १४२ ॥

शत्रुशल्याभिधो रङ्गः श्रीकण्ठः कनकप्रभः ।
अभङ्गो जयमाला च वसन्तो राघवो रतिः ॥ १४३ ॥

---

135d. B. एकलसमा 136b. B. सूक्ष्मे 137b. B. स्थूलो
137c. B. पिपिलका Before 138 B. ॥ नवमः प्राणः ॥
139a. B. चचत्पु:– 139b. B. ततश्चाच–
140b. B. क्रमादमी 140d. B. मयाः 141d. B. अड्डः
142c. B. लक्ष्मीगुरुः 143d. B. वसंतराघवो

सर्वेऽपि मिलितास्तालाः सप्तत्रिंशन्मयेरिताः ।
ताले चच्चत्पुटे ज्ञेयं गुरुयुग्मं लघुः प्लुतः ॥
सद्योजातोद्भवः शुक्लवर्णस्ततोऽष्टमात्रिकः ॥ १४४ ॥

ऽऽ।ऽ̒

॥ इति चच्चत्पुटः ॥

*भगणे गु[ 34ª ]-रुरेव स्यात्ताले चाचपुटाऽभिधे ।
वामदेवमुखोत्पन्नः षण्मात्रः पीतवर्णभाक् ॥ १४५ ॥

ऽ।।ऽ

॥ इति चाचपुटः ॥

षट्पितापुत्रके ताले प्लुतो लघुर्गुरू लपौ ।
अघोरास्यसमुद्भूतः श्यामो द्वादशमात्रिकः ॥ १४६ ॥

ऽ̒।ऽऽ।ऽ̒

॥ इति षट्पितापुत्रकः ॥

प्लुताऽऽद्यन्तस्तु मगणः सम्पक्वेष्टाकसंज्ञके ।
आसीदीशानवक्त्रात्तु रक्तो द्वादशमात्रिकः ॥ १४७ ॥

ऽ̒ऽऽऽऽ̒

॥ इति सम्पक्वेष्टाकः ॥

गुरुत्रयं समुद्दिष्टमुद्घट्टे भरतादिभिः ।
तत्पुरुषाननसम्भूतः षण्मात्रो बहुवर्णकः ॥ १४८ ॥

ऽऽऽ

॥ इत्युद्घट्टः ॥

॥ इति मार्गतालाः ॥

after 144. B. ऽऽऽ̒ऽ̒

*P. begins from here; top margin of recto and verso of folios 53–56 is torn.

146ᵇ. B. गुरुलपौ 147ᶜ. B. आसीदीशानवक्त्रात्तु 148ᵇ. B. उध्वट्टे

148ᵈ. B. [illegible]; after 148 B. इत्युध्वट्टः

लघुना त्वादितालः स्यात्

।

॥ इत्यादितालः ॥

द्वितीयो दौ लघुः स्मृतः ।

० ० ।

॥ इति द्वितीयः ॥

द्रुतत्रयं विरामान्तं तृतीये

० ० ०̐

॥ इति तृतीयः ॥

प्रतिमण्ठके सो भो वा ॥ १४९ ॥

॥ ऽ अथवा ऽ ॥

॥ इति प्रतिमण्ठः ॥

मण्ठके ताले न जौ वा षड्गगाः परे ।

।।। ।ऽ। अथवा ऽऽऽ ।ऽऽ ऽ।ऽ ।।ऽ ऽऽ। ऽ।।

॥ इति मण्ठः ॥

दलौ रूपे

० ।

॥ इति रूपकः ॥

विरामान्तं दद्वयं झम्पके लघुः ॥ १५० ॥

० ०̐ ।

॥ इति झम्पा ॥

ध्रुवके नो विरामान्तो

। । ।̐

॥ इति ध्रुवकः ॥

---

149b. B. दोल्घुः 149c. B. द्रुतयम्; 149d. B. सौभो

After 150ab. B. ।।। ।ऽ। ऽऽऽ ।ऽऽ ऽ।ऽ ।।ऽ ऽऽ। ऽऽ॥ इति मण्ठभेदाः ॥

P. ॥ऽ।ऽऽऽ ।ऽऽ ऽ।ऽ ।ऽ ऽ̇ऽ। ऽ

ऽद्रुताले दद्वयं लघू ॥

०० ॥

॥ इत्यद्रुतालः ॥

[ 34[b] ] एकताली द्रुतेनैव

॥ इत्येकताली ॥

रगणेन तु ढेंकिका ॥ १५१ ॥

ऽ । ऽ

॥ इति ढेंकी ॥

उमातिलकसंज्ञे तु द्रुतद्वन्द्वं लघुर्गुरुः ।

० ० । ऽ

॥ इत्युमातिलकः ॥

दद्वयं च गुरुः कामे

० ० ऽ

॥ इति कामः ॥

विष्णौ द्रुतचतुष्टयम् ॥

लघुर्द्रुतो गुरुः प्रान्ते **विद्धद्धिः** परिकीर्तितः ॥ १५२ ॥

० ० ० ० । ० ऽ

॥ इतिविष्णुः ॥

ब्रह्माभिधे लघुर्दौ लो द्रुतौ लो दत्रयं लघुः ॥

। ० ० । ० ० । ० ० ० ।

॥ इति ब्रह्मतालः ॥

शिवेऽणुद्वितयं दः स्याज्

ᵕ ᵕ ०

॥ इति शिवः ॥

After 151[a]. P. इति भुकः 151[b]. B. अद्रु, P. लघू,
After 151[b]. B. इत्यद्रुतालः ॥ 151[c] P. एका ताली
152[b]. B. लघुगुरः 152[f]. B. ऽकीर्तितः

जये जो लो द्रुतौ प्लुतः ॥ १५३ ॥

। ऽ । । ० ० ऽ

॥ इति जयः ॥

चित्रेऽणुः स्याद्

॥ इति चित्रः ॥

द्रुतौ जश्च गुरुर्नारायणाभिधे ॥ १५४ ॥

० ० । ऽ । ऽ

॥ इति नारायणः ॥

दौ लो दार्धद्वयं दो लो द्रुतो दार्धद्वयं द्रुतः ।
दार्धं च दद्वयं दार्धं दलौ लक्ष्म्यभिधे क्रमात् ॥ १५५ ॥

० ० । ˇ ˇ ० । ० ० ˇ ˇ ० ˇ ० ० ˇ ० ।

॥ इति लक्ष्मीतालः ॥

सदद्वयगुरोर्द्वंद्वं गुरुताले गुरोर्मतम् ।

० ० ऽ ० ० ऽ

॥ इति गुरुः ॥

पञ्चभिर्लघुभिर्गौरी

। । । । ।

[ ॥ इति गौरी ॥ ]

सलपैः स्यात् कलध्वनिः ॥ १५६ ॥

। । ऽ । ऽ

॥ इति कलध्वनिः ॥

153[ab]. B. ब्रसामिर्घु दे लो दत्रयं लद्रुः । ० । ० ० । ० ० ० । इति ब्रह्मताल ॥ P. लघुदौलो द्रुतौ लो, after 153[c]. B. ऽ । ० इति शिव ॥ 153[d]. B. विजये
155[ab]. B. दार्द्ध- 155[b]. P. द्रुतौ 155[d]. BP. लक्ष्म्याभिधे
156[b]. B. मतंः, after 156[b]. । । । । । इति गौरी ।। not found in Mss.
156[d]. BP. सलयैः

*शत्रुशल्याभिधे ताले लो द्रुतौ लः प्लुतद्वयम् ।*

।०० । ऽ̒ ऽ̒

**॥ इति शत्रुशल्यः ॥**

चतुर्द्रुतास्तु गुर्वन्ता रङ्गताले प्रतिष्ठिताः ॥ १५७ ॥

०००० ऽ

**॥ इति रङ्गः ॥**

लघुर्गुरुर्लघुद्व[ 35 ]न्द्वं श्रीकण्ठे तु प्रतिष्ठितम् ।

। ऽ । ।

**॥ इति श्रीकण्ठः ॥**

कनकप्रभसंज्ञे तु लद्वयं दद्वयं गुरुः ॥ १५८ ॥

। । ० ० ऽ

**॥ इति कनकप्रभः ॥**

अभङ्गे लप्लुतौ ज्ञेयौ

। ऽ̒

**॥ इत्यभङ्गः ॥**

जयमाला दलौ गपौ ॥

० । ऽ ऽ̒

**॥ इति जयमाला ॥**

वसन्तताले नगणो मगणः परिकीर्तितः ॥ १५९ ॥

। । । ऽ ऽ ऽ

**॥ इति वसन्तः ॥**

दार्धयुग्मद्रुताऽऽवृत्तित्रयं पश्चाद् द्रुतत्रयम् ।
त्रिरामान्तं लघुः प्रान्ते राघवेऽपि प्रकीर्तितः ॥ १६० ॥

---

157[b]. BP. लौ द्रुतौ P. ड्रुतौ; after 157[b]. B. ।००। ऽऽ इति शल्याभिधः ।।
P. ०० । ऽ̒ ऽ̒

after 157 B. रंगतालः; after 158 B. ।००। इति कनकप्रभः

159[b]. B गपैः ०।ऽ̒ऽ̒; after 159[d]. P. इति वसन्त.

160[a]. B. दार्द्ध-; P. -ड्रुता- 160[b]. B. पश्चाद्रुतद्वयम् ।

After 160 B. ᵕᵕ० ᵕᵕ० ᵕᵕ० ००।; P ००० 6 इति राघव ॥

ᴗ ᴗ ० ᴗ ᴗ ० ᴗ ᴗ ० ० ० ०ᶜ।

## ॥ इति राघवः ॥

रतिताले समुद्दिष्टो लघुरादौ ततो गुरुः ॥ १६१ ॥

। ऽ

## ॥ इति रतिः ॥

अन्येऽपि बहवस्ताला मया नैव प्रदर्शिताः ।
तद्भेदज्ञापकोपायद्वयमद्य वदाम्यहम् ॥ १६२ ॥

एकः प्रस्तारकः, सङ्ख्या द्वितीया मुनिसम्मता ।
नष्टादिर्न मयोद्दिष्टः केवलं कौतुकं यतः ॥ १६३ ॥

आदौ स्थापितान्महतोऽधस्तादल्पं लिखेत्सुधीः ।
शेषं यथोपरिष्टात्तु तथैव सर्वतः क्रमात् ॥ १६४ ॥

प्रागूने वामसंस्थांस्तु सम्भवे महतः पुनः ।
अल्पानसम्भवे तालपूर्त्यै भूयोऽप्ययं विधिः ॥ १६५ ॥

प्रस्तारोऽयं बुधैः कार्यः सदा सर्वद्रुतावधिः ।
लघौ गुरौ प्लुते व्यस्ते समस्ते च भवेदसौ ॥
प्रस्तारो न भवेद् व्यस्ते सविरामे द्रुतेऽपि च ॥ १६६ ॥

## ॥ इति प्रस्तारः ॥

स्था[ 35ᵇ ]-पयित्वा क्रमादेकव्यङ्कावन्त्यं पुरा स्थितैः ।
द्वितीयतुर्यषष्ठाङ्कैः समं सम्मेलयेद् बुधः ॥ १६७ ॥

तृतीयपञ्चमाङ्काभ्यामभावे तुर्यषष्ठयोः ।
क्रमशस्तं लिखेद्योगमग्रतोऽव्यग्रया धिया ॥ १६८ ॥

क्रियते दक्षिणस्थैवमङ्कपङ्क्तिर्मनोहरा ।
सा चाङ्कैरिष्टतालस्थद्रुतसङ्ख्यैः समाप्यते ॥ १६९ ॥

161ᵇ. BP. गुरु ; P. ० । ऽ इति रतिताल ॥
162ᵃ. B. बहवः स्ताला 162ᵇ. P प्रदर्शिताः
164ᵇ. B. अधस्तत्
165ᵃ. B. प्रागूनंवामसंस्था तु 165ᶜ. B सम्भवेत् 167ᵃ. P. क्रमात्
169ᶜ. BP. सचाङ्कैः 169ᵈ. BP. द्रुतालेख्यैः

द्रुतो लघुः सार्धमात्रो गुरुः सार्धद्विमात्रकः ।
प्लुतः सार्धत्रिमात्रश्चेत्येकैकद्रुतवर्धितैः ॥
तालभेदाः क्रमादङ्कैः सङ्ख्यायन्ते स्थितैरिह ॥ १७० ॥

यदङ्कयोगादन्त्योऽङ्को प्राप्तस्तैरन्ततः क्रमात् ।
भेदा द्रुतान्ता लघ्वन्ता गुर्वन्ताश्च प्लुतान्तकाः ॥
सङ्ख्यायन्त इति प्रोक्ताः सङ्क्षेपं **पूर्वसूरिभिः** ॥ १७१ ॥

## ॥ इति सङ्ख्या ॥

अथ ताले **गुरूद्दिष्टान्** दश सञ्चान् ब्रुवेऽधुना ।
अन्योन्यं तालयोर्योगसञ्चारः सञ्च उच्यते ॥
लक्ष्यज्ञाः साधकाः सम्यक् तं जानन्ति परे न च ॥ १७२ ॥

कलश्चित्राऽऽदरौ दिगिदिगिश्चेत्यार्धकर्तरी ।
कर्तर्युरुडुदद्दाख्या झेंकृतिर्मिश्रकस्त्विति ॥ १७३ ॥

कल्पोद्भवाः पाटवर्णास्तेतेतेथैत्रितीरिताः ।
वर्णाः स्युस्तकिडा इति चित्रे गिडदगाः परे ॥ १७४ ॥

पाटाश्चाऽऽदरसंज्ञे तु सञ्चे धरगिडा मताः ।
सञ्चे दिगिदिगौ प्रोक्ताः पाटा दिगिदिर्गीति च ॥ १७५ ॥

**सूरिभि**रर्धकर्तर्यां [ 36[a] ] तकावृत्तिर्मता क्रमात् ।
तृतीयतुर्यसञ्चाभ्यां कर्तरीति निगद्यते ॥ १७६ ॥

उरुडोरथ सञ्जाता वर्णा धिरिगिडा इति ।
दद्दे स्याद्दद्दद्देति झेंकृतौ झेमिति स्मृतः ॥ १७७ ॥

---

170[a]. B. इति लघुः, P. इतो लघुः; 170[cd]. BP. सार्धद्विमात्रश्चै ेक-
170[f]. BP. स्थितेरिह.
171[a]. B. दंयांडंको 171[b] P. प्रश्नस्तंः B. तैरंतः 171[c]. B. लघ्वांत 171[f]. B. संक्षेयं
172[a]. B. गुरुद्दिष्टान् P. गुरुदिष्टान् 172[c]. P. अन्योन्य–, योगे 172[f]. P. जानाति
173[a]. B. चित्राद्दरौ 173[c]. B. –दद्याख्या 174[d]. B. चित्रे गिदगाः परे
176[a]. B. सूरिभिः रर्द्ध– 176[b]. B. तकाचवृत्तिर्मता P. तकाचवृत्ति–

सञ्चानां मिश्रणान्मिश्रः सोऽपि नानाविधो मतः ॥ १७८ ॥

**॥ इति दश सञ्चाः ॥**

**॥ इति तालाः ॥**

घनवाद्यमिदं प्रोक्तं सुषिरं भण्यतेऽधुना ॥ १७९ ॥

वंशः पावः पाविका च मुरली मधुकर्यपि ।
चुक्का शङ्खं तित्तिरी च शृङ्गं च काहलादयः ॥ १८० ॥

सुषिरेषु समग्रेषु वंशः श्रेष्ठतमः स्मृतः ।
अतो मयाऽऽदौ वंशस्य लक्षणं प्रतिपाद्यते ॥ १८१ ॥

त्वक्सारशिंशिपादन्तरक्तप्रोज्ज्वलचन्दनैः ।
खदिरेणाऽयसा रूप्यस्वर्णाभ्यां च विनिर्मितः ॥ १८२ ॥

वंशस्तु सरलः श्लक्ष्णो व्रणग्रन्थ्यादिवर्जितः ।
कनिष्ठाङ्गुलिमानेन रन्ध्रं तस्यान्तरे भवेत् ॥ १८३ ॥

तस्य द्वे त्रीणि चत्वारि शिरोदेशेऽङ्गुलानि तु ।
त्यक्त्वा फूत्कारसुषिरं कार्यमङ्गुलमानतः ॥ १८४ ॥

मुखरन्ध्राद् भवेत्तारस्वररन्ध्रं मनोहरम् ।
एकाङ्गुलान्तरं तत्तु **मतङ्गमुनि**सम्मतम् ॥ १८५ ॥

अर्धाङ्गुलान्तराणि स्यू रन्ध्राण्यन्यानि सप्त च ।
तान्यष्टौ बदरीबीजसङ्काशानि भवन्ति हि ॥ १८६ ॥

एष पञ्चाङ्गुलो वंशः कथितो **वंशवादकैः** ॥ १८७ ॥

---

178ᵃ. B. पंचानाम्  179ᵇ. B. शुषिरम्  180ᵃ. B. वंशपाठः पाठिका
180ᶜ. B. चक्का  180ᵈ. B. कलहादयः  181ᵃ B. शुषिरेषु
181ᶜ. B. मयादौं  182ᵃ. B. –दांत–
183ᵃ. B. शरसाः श्लक्ष्णौ P. सरलो श्लक्ष्णो  183ᵈ. B. रंघ्रम्
184ᵇ. BP. शिरोदेशों-  184ᵉ. B. पूत्कारशुषिरम्
185ᵃ. P. मुखरन्घ्रम्  185ᵇ. B. –रंघ्रम्
186ᵃ. B. अंतराणि स्फु.. P. अंतराणि स्फू  186ᵇ. B. सप्त वा
187ᵇ. B. वंशवादिकैः

पञ्चाङ्गुलादिहाऽऽ [ $36^{b}$ ]-रभ्य यावदष्टादशाङ्गुलम् ।
एकैकाङ्गुलवृद्ध्या स्युर्वंशाः पञ्चाङ्गुलादयः ॥ १८८ ॥

द्व्यङ्गुलक्रमवृद्ध्या च वंशानां दैर्घ्यकल्पना ।
समस्तवंशरन्ध्रेषु स्वराः स्थाप्या यथाक्रमम् ॥ १८९ ॥

अपरे भूरयो भेदा देशीवंशगता मताः ।
कल्पयन्तु यथेष्टं तान् विद्वांसस्तत्परायणाः ॥ १९० ॥

॥ इति वंशभेदाः ॥

इति श्रीमन्नाट्यशास्त्रे श्रीकण्ठकविविरचितायां रसकौमुद्यां पूर्वखण्डे वाद्याध्यायश्चतुर्थः ॥ ४ ॥

---

188c. B. एकैकांटाल-   188d. B. पंचगुलादयः
189c. B. -रंध्रेषु   190d. B. विद्वांससूत्परा-
After 190 P. -भेदा ॥ colophon: B. श्रीकंठ-

## ॥ पञ्चमोऽध्यायः ॥

सन्तप्तस्वर्णवर्णाम्बरवररुचिरो बर्हिपिच्छाढ्यमौलि-
श्चञ्चत्कर्णावतंसीकृतबकुलल्लसद्गलयुग्माभिरामः ।
संयुक्तो गोपबालैर्दिनमणितनयातीरवानीरभूमौ
नृत्यैर्गीतैर्विनोदैरखिलजनमनोरञ्जकः पातु कृष्णः ॥ १ ॥

नृत्याध्याये पञ्चमे तु नाट्योत्पत्तिस्ततः स्तुतिः ।
रङ्गदेशश्चाऽऽरभटी नानादेशोद्भवा नटी ।
तदङ्गादि तथा नाट्यं करणाद्यं क्रमाद् ब्रुवे ॥ २ ॥

पूर्वं श्रीपरमेश्वरेण कथिता वेदा यदा ब्रह्मणे
तत्काले किल नाट्यवेदमखिलं तस्मै ददौ स प्रभुः ।
*तत्पश्चाद् **भरता***य तेन विधिना नाट्यं प्रदत्तं पुन-
र्गन्धर्वाप्स*रसां गणैः शिव*पुरस्तेनापि तद्दर्शितम् ॥ ३ ॥

पार्वत्या **भरताय** लास्यमथ च श्री**तण्डुना** ताण्डवं ।
स्वैरं दर्शयति स्म[ 37ª ]खण्डपरशुः प्रीत्या स्वयं कल्पितम् ।
*लास्यं बाणसुता*मुषां गिरिसुता शिक्षापयामास तत्
सापि द्वारवतीगतां व्रजवधूं सौराष्ट्रनारीं च सा ॥ ४ ॥

नानादेशसमुद्भवा प्रियतमा शिक्षापिता तत्परं
सौराष्ट्रीयवधूजनेन भुवि तज्जातं प्रसिद्धं क्रमात् ।
पाठ्यं चाऽभिनयं च गीतमखिलं सङ्गृह्य सर्वं रसं
वेदेभ्यः क्रमशश्चकार रचनां सङ्गीतशास्त्रे विधिः ॥ ५ ॥

### ॥ इति नाट्योत्पत्तिः ॥

1ª. B. –वर्णांबरं, –रुचरो, –ि
2ᵇ. P. स्तुति । 2ᶠ. BP. क्रमात् ।
3ª. B. कथितो 3ᶜ. etc. Portion between asterisks is torn in P.
3ᵈ. B. गुणेः, B. त्तदर्शितम्
4ᵇ. B. स्मैरं 4ᶜ. B. उखा 4ᵈ. B. सौराष्ट्रीनारी
5ª. B. –समुद्भव– 5ᶜ. B. पाठ्यं, P. पाद्यं; B. चाभिनयं

नाट्यं सर्वजनप्रमोदजनकं धर्मार्थकामप्रदं
धैर्यौदार्यविलासकीर्त्तिकरणं तापत्रयोन्मूलनम् ।
नानादुःखनिवारणं त्रिभुवने खेदार्तिशोकापहं
संजह्रे कथमन्यथा किल मनः श्रीनारदादेरपि ॥ ६ ॥

नृत्यं पश्यति यः सरोजसुदृशां सौन्दर्यसारश्रियां
रम्याणां रुचिराङ्गहारकरणव्यापारलीलाभरैः ।
मुक्ताविद्रुमपद्मरागकनकप्रारब्धभूषाजुषा–
मैन्द्रं तस्य पदं विभाति सुतरां भूमीपतेर्भूतले ॥ ७ ॥

नृत्यं पश्यति यः प्रियाशतयुतो नित्यं कृती रञ्जकं
तस्य स्वर्गतलं क्षितावपि भवेद् द्रष्टुर्धरित्रीपतेः ।
पार्श्वद्वन्द्ववधूकरार्पितमहास्थूलप्रदीपप्रभा–
नष्टध्वान्तसभातले गुरुरजःकर्पूरधूलीभरे ॥ ८ ॥

## ॥ इति नाट्यस्तुतिः ॥

## ॥ अथ रङ्गभूमिः ॥

[ 37[b] ]अत्यन्तोज्ज्वलसौधभूमि*सुभगा माणिक्यहेमादिक–
प्रोद्यद्भित्तिमहार्घ्यरत्नखचितस्तम्भा सुगन्धान्विता ।
कौशेयांशुकवद्वितान*रुचिरा *धूपैर्मनोहारिणी
पुष्पश्रेणियुता विभाति नृपते*र्नृत्यस्य शाला स्फुटम्* ॥ ९ ॥

यस्यां भित्तिगतेन्द्रनीलमणिषु प्रोद्दीप्त*रत्नावलिं*
दृष्ट्वा नूतननीरदोपरिलसद्विद्युल्लतानां भ्रमात् ।

6[a]. B. -प्रद 6[b]. B. धैर्यो–, P. –कार्त्ति
7[a]. B. –सदृशां 7[b]. B. –हारहारकरण– 7[d]. B. भूमीयतेः
8[a]. B. नित्यं पश्यति यः स्वरोजसदृशां प्रिया–; B. नीत्यं कृती, P. नृत्यं कृती
8[b]. भवेद्द्दृष्टुधरित्री–; P. भवेतद्दृष्टुर्धरित्री–; 8[c]. B. -प्रदीप्रभा- P. -प्रदीपा-
after 8 ॥ इति नाट्यस्तुतिः ॥ not given in P.
9[a]. BP. –उज्वल– 9[d]. B. पुण्यश्रेणी–
10.[a] BP. प्रोदीप्त-
*Portion between asterisks is torn in P.

गम्भीरं मुरजप्रतिध्वनिमपि श्रुत्वोर्ध्वगेहोद्भवं
प्रोन्मत्तप्रमदासखो वितनुते नृत्यं मयूरव्रजः ॥ १० ॥
वारंवारं मृदङ्गध्वनिभरसुभगा स्निग्धगम्भीरघोषं
नानाचित्रोज्ज्वलाङ्गी सुरपतिधनुषा निर्भरं शोभमानम् ।
विद्युन्मालाविशिष्टं चपलतरनटीचारुनाट्याभिरामा
भास्वद्भित्तीन्द्रनीला तुलयति जलदं नृत्यशाला विशाला ॥ ११ ॥
स्थित्वा तत्र महीपतिर्मणिमये सिंहासने प्राङ्मुखः
किं वा काममुदङ्मुखो नटनटीनाट्यं समालोकयेत् ।
पार्श्वद्वन्द्वविराजमानयुवतिव्यालोलहस्ताम्बुज–
व्यावल्गद्वलयालिचामरमरुत्संवीज्यमानः सुखी ॥ १२ ॥
नृत्यालोकनतत्परे नरपतौ श्रीसूत्रधारः कृती
नीत्वा चीनपटीलसज्जवनिकामध्ये नटीमुत्तमाम् ।
रागालापमृदङ्गताल[38a]-रचनां रम्यां सभामोहिनीं
सम्पाद्याऽऽरभटीं द्रुतं किल नयेदन्तःपटीं दूरतः ॥ १३ ॥
नर्तक्या वामभागे विलसति नितरां सूत्रधारोऽतिमुग्ध–
श्चञ्चत्पाणिर्मृदङ्गे श्रुतिकरणपटुर्दक्षिणे तालधारी ॥
रागालापे विदग्धाः परभृतसदृशा गायकाः पृष्ठदेशे
*प्रोक्ते*त्थं नाट्यशास्त्रे **भरतमुनि**मुखैः प्राक्तनी नाट्यरीतिः ॥१४॥
*स्थि*त्वा पादसरोरुहाग्रविषये रेखादिभिः प्रोज्ज्वला
संस्था*प्योरु*नितम्बबिम्बयुगलं संकुच्य जानुद्वयम् ।
हस्ताभ्यां कुसुमाञ्ज*लिं सुललितां* धृत्वा स्तनाभ्यां मुहु–
र्नम्रीभावमुपागता नरपतेरग्रे नटी राजते ॥ १५ ॥

---

11d. P. -भितीन्द्र-
12a. P. प्राङ्मुखः 12b. B. उदन्मुखो, 12c. B. -हस्ताबुजः, 12d. B. व्यावलाद्
13c. B. रागलाप-, समामोहिनीम्
14b. B. चंचत्पाणिमृदगी
14d. B. मुखयैः 15a. B. रेखादिमि प्रोज्वला
*Portion between asterisks is torn in P.

*लक्ष्मीकान्तविरञ्चिशम्भुमदनब्रह्मात्मजापार्वती–*
दिक्पालान् प्रणिपत्य चारु पुरतो नृत्यं विधाय प्रभोः ।
शृङ्गारैरखिलैर्विभूषितवपुर्धर्मार्थकामाप्तये
पात्रं भूरिगुणान्वितं क्षिपति सत्पुष्पाञ्जलिं मध्यतः ॥ १६ ॥

पश्चान्मञ्जुलकण्ठगायकजना गायन्ति गीतं मुदा
त्राथैथोंकृतिथोंकृतिध्वनिभरैर्नृत्ये परा कामिनी ।
दांदांदिंदिमिकिद्रमिद्धमिददींकारो मृदंगे मुहु–
र्देवा नृत्यदिदृक्षयैव मिलिताः स्वर्गादपि क्ष्मातले ॥ १७ ॥

## ॥ इत्यारभटी ॥

## ॥ अथ नटीनृत्यम् ॥

गीतोपाङ्गमृ[ 38b ]-दङ्गतालरचनालास्योपयुक्ता क्रिया
कामं मन्मथलालसाभिरखिला सम्पाद्यते चेन्मुदा ।
स्निग्धो मुग्धरसस्तदैव **भरतो**द्दिष्टः समुत्पद्यते
नैवं चेदतिमञ्जुलोऽपि स रसाभासः परं जायते ॥ १८ ॥

तन्वङ्गी शरदिन्दुसुन्दरमुखी सद्वृत्ततुङ्गस्तनी
नीलेन्दीवरमञ्जुलद्युतिलसन्नेत्रोर्मिकिर्मीरिता ।
तत्तन्नृत्यकलाकलापकुशला कन्दर्पकान्तोपमा
कस्तूरीरचितं दधाति तिलकं गोरोचनाचर्चितम् ॥ १९ ॥

रूपेण स्मरकामिनं जितवती वक्त्रेण* पूर्णं* विधुं
कण्ठेनापि वसन्तकोकिलवधूं नेत्रेण नीलोत्पलम् ।
भ्रूयुग्मेन विलोलकृष्णभुजगीं पङ्केरुहं पाणिना
पादेन स्थलपङ्कजं **मुनिवरैः** प्रोक्तोत्तमा नर्तकी ॥ २० ॥

16d. P. -गुणान्वितां
17b. P. ताथैथाकृतिथोंति 17d. B. मालिताः; after 17. B. नटीनृत्यम्
18c. स्निग्धो…द्दिष्टः repeated in B.
19a. B. शिरदिंदु- 19b. किर्मीरितत-
*Portion between asterisks is torn in P.

तत्तादृङ्नवपल्लवादपि करौ पादौ तथौष्ठाधरौ
रम्यौ दन्तरुचोज्ज्वलस्मितसुधा मुग्धा प्रसूनादपि ।
रोलम्बादपि लोचने सुललिते कण्ठः पिकादुत्तम-
स्तन्वङ्गी विफलीचकार वपुषः कान्त्या वसन्तश्रियम् ॥ २१ ॥

मध्यं क्षीणमलक्ष्यमेव पुलिनप्रख्यं नितम्बद्वयं
वक्षोजद्वितयं सुमेरुसदृशं पूर्णेन्दुतुल्यं मुखम् ।
नट्या नाट्यविलोकनेन परमानन्दः समुत्पद्यते
गाढालिङ्गनचुम्बनादि[ 39ᵃ ]-भिरहो जाने न कीदृक् सुखम् ॥ २२ ॥

रेखादिप्रचुरप्रकारघटनाचातुर्यदीक्षागुरु-
र्नानानृत्यपटीयसी किल नटी राज्ञः पुरो नृत्यति ।
यस्या नृत्यकलां विलोक्य विबुधाः शक्रादयो मोहिता
रम्भाद्या अपि मुक्तमानहृदया लज्जां व्रजन्ति ध्रुवम् ॥ २३ ॥

वक्षोजे गुरुता नितम्बगरिमा मध्यस्थले क्षीणता
चाञ्चल्यं चरणारविन्दयुगले तन्व्याः समुज्जृम्भते ।
तादृक्ताण्डवडम्बरप्रमुदितश्रीकण्ठहस्ताम्बुज-
व्यावल्गड्डमरुश्रियं जितवती स्वैरं नटन्ती नटी ॥ २४ ॥

अत्यन्तत्वरितं भ्रमिं वितनुते किं वाच्यमत्यद्भुतं
नाऽङ्गोपाङ्गविभागवेदनमहो तन्व्यास्तदा जायते ।
किं चेयं किल सम्मुखं च विमुखं सव्यापसव्यप्लुतं
प्रोक्तं यद्भरतेन तत्प्रकुरुते तूर्णं निमेषादपि ॥ २५ ॥

21ᵃ. B. -तादृङ्नध- 21ᵇ. P. -उज्वल- 21ᶜ. B. -उत्तमाः
22ᵃ. P. अलक्षम् , B. पुलिनपुख्यं
23ᵃ. BP. -दिक्षा- 23ᶜ. B. यस्याम्
24ᵃ. B. -गिरीमा B. मध्यस्थली- 24ᶜ. B. तादृत्तांडवडंबरा- 24ᵈ B. व्यावलाड्डमरु-
B. भटंती
25ᵃ. B. अत्यन्तम्
25ᵇ. B. तन्वास्तदा

लाटी चारुन*टी ल*सन्नवपटी पञ्चास्यभास्वत्कटी
नीलेन्दीवरमुग्धलोचनपुटी गौरस्फुरद्दोस्तटी ।
हेमप्रोज्ज्वलवर्तुलस्तनघटी कन्दर्पलीलाकुटी
पाटीरद्रवचर्चिताङ्गसुभगा रङ्गस्थले नृत्यति ॥ २६ ॥

कार्णा*टप्रमदा मनो*जसमदा ताम्बूलभास्वद्रदा
प्राणेशस्य सुखप्रदा रतिरणे गम्भीरनाभीह्रदा ।
पुष्पश्रेणिविचित्रचारुकबरी रागाङ्गहारोज्ज्वलं
ला[ 39b ]-स्यं हारि करोति हारविलसद्वक्षोरुहा नर्तकी ॥ २७ ॥

नित्यं धर्मरता विचित्रसुरता तुङ्गस्तनाभ्यां नता
तन्वङ्गी तनुचारुमध्यललिता वक्त्रोन्नतभ्रूलता ।
बाह्याभ्यन्तरभोगतत्परमनोवृत्तिर्मनोहारिणी
नीलेन्दीवरलोचना सुवचना नृत्ये परा गूर्जरी ॥ २८ ॥

काश्मीरद्रवगौरकान्तिवपुषा विद्युल्लतास्पर्धिनी
प्रेमोल्लासरता रतेऽतिचतुरा बिम्बाधरा सुन्दरी ।
प्रोत्तुङ्गस्तनभङ्गुरा कृशतनुः फुल्लारविन्देक्षणा
नानायुक्तिमनोहरा किल नटी लास्योत्तमा गूर्जरी ॥ २९ ॥

तत्तत्कामकलाकलापकुशला काश्मीररागोज्ज्वला
मुक्तादामविभूषितस्तनतटी चन्द्राननाऽऽन्ध्री नटी ।
आर्ता गाढरते नखक्षतयुते लज्जाविहीना मना-
-गाचारे न हि तत्पराऽतिचतुरा नाट्येपि गीतेपि च ॥ ३० ॥

साक्षेपा ग्राम्यनानावचनसुरचना क्षीणमध्या विलज्जा
तन्वङ्गी तुङ्गवक्षोरुहयुगलतटी कञ्चुकीबद्धग्रन्थिः ।

*Portion between asterisks is torn in P.

27c. B. –उज्ज्वलाम् 28d. P. गूर्जरी B. गुर्जरी
29d. B. गूर्जरी P. गुज्र्जुरी 30a. P. कश्मीर–
30b. B. विभूषितम् B. चंद्राननांध्री 30c. B. नखक्षतं- 31b. B. युगलनटी

शृङ्गाराभ्यन्तराले बहुमदनकलाचेष्टया चञ्चलाङ्गी
रक्ता सङ्गीतरङ्गे लसति कि*ल महाराष्ट्र*नारी सुवेषा ॥ ३१ ॥

मृद्वङ्गी शरदिन्दुसुन्दरमुखी संश्लेषचुम्बोत्सुका
कन्दर्पाजिकठोरचेष्टितरता धम्मिल्लभारैर्यु[ 40ª ]-ता ।
लोलच्चीन*निचोलकान्तिकलिता वक्षोजभारान्विता
स्फूर्जद्बिम्बनितम्बिनी विजयते गौडी च बङ्गी वधूः ॥ ३२ ॥

नानामन्त्रविनोदयन्त्रितपतिः कामाकुला भूरिशः
कस्तूरीतिलकोज्ज्वला विधुमुखी पाटीरचर्चान्विता ।
प्रोत्तुङ्गस्तनलोलहारललिता शैरीषवत्कोमला
युक्तिव्यूहविशारदाऽतिसमदा स्यात्कामरूपाङ्गना ॥ ३३ ॥

उन्मत्तोत्कलकामिनी गुणवती गाढाङ्गरागोज्ज्वला
स्वच्छन्दं विपरीतमन्मथरणे पुंवत्प्रगल्भा भवेत् ।
दन्ताऽऽघातनखक्षतस्तनयुगाऽऽमर्दप्रिया प्रायश-
स्तद्रूपैव कलिङ्गदेशयुवतिर्भाषैव भिन्ना तयोः ॥ ३४ ॥

पुष्पाऽऽमोदमनोहराऽतिचतुरा धम्मिलभारातुरा
ताम्बूलारुणिताधराऽतिमधुरा स्मेरा विशालस्मरा ।
रेखादर्शनतत्पराऽतिमुखरा सप्तस्वरालापिनी
लीलालास्यकलोत्कलीययुवतिः कालिङ्गनारी तथा ॥ ३५ ॥

## ॥ इति नानानटी ॥

अङ्गादीन्यधुना वक्ष्ये नाट्योक्तानि यथाक्रमम् ।
शिरो हस्तौ तथा वक्षः पार्श्वे कटितटं पदौ ॥ ३६ ॥

---

31ᶜ. P. चेष्टाया
*Portion between asterisks is torn in P.
32ª. B. मृद्विंगी 32ᵇ. P. धर्मिल्ल–
32ᶜ. *Folio 62( sts. 32ᶜ-40ᵈ ) is missing in P.
32ᵈ. B. स्फुर्जद्–, गोडी, वधुः 33ᵈ. B. यूक्ति- 36ª. B. अङ्गादिनि

स्कन्धौ ग्रीवा भुजौ कुक्षिरूरू जङ्घाद्वयं तथा ।
मणिबन्धस्तथा जानुयुग्मं च भूषणान्यपि ॥ ३७ ॥

दृष्टी भ्रुवौ पुटौ तारे कपोलौ [ 40[b] ]नासिकाऽनिलौ ।
अधरौ च रदा जिह्वा चिबुकं च मुखं तथा ॥ ३८ ॥

पार्ष्णियुग्मं तथा गुल्फावङ्गुल्यः करपादयोः ।
तले च मुखरागश्च प्रचारा विविधाः पुनः ॥ ३९ ॥

करणानि च कर्माणि क्षेत्राणि करयोः क्रमात् ।
एतन्मया समुद्दिष्टमङ्गादि नाट्यकारणम् ॥*
प्रत्येकं लक्षणं तत्र साम्प्रतं प्रतिपाद्यते ॥ ४० ॥

## [ ॥ अथ चतुर्दशविधं शिरः ॥ ]

धुतं विधुतमाधूतमवधूतं च कम्पितम् ।
आकम्पितोद्वाहिते च परिवाहितमञ्चितम् ॥ ४१ ॥

निहञ्चितं परावृत्तमुत्क्षिप्ताऽधोमुखे तथा ।
लोलितं चेति विज्ञेयं चतुर्दशविधं शिरः ॥ ४२ ॥

धुतमुक्तं शिरस्तिर्यक्पर्यायेण शनैर्गतम् ॥

### ॥ इति धुतम् ॥

तदेव विधुतं प्रोक्तं शीघ्रचालनतो बुधैः ॥ ४३ ॥

### ॥ इति विधुतम् ॥

आधूतं तु शिरस्तिर्यक् सकृदुच्चैः कृतं मतम् ॥

### ॥ इत्याधूतम् ॥

---

37[b]. B. उरू
39[a]. B. तदा
40[cd]. B. -द्दिष्टसंगादि
42[a]. BP. निदृञ्चितम्

* P. begins from here.
41[a]. B. विधूतमाधुतम्　41[c]. BP. -उद्वाहते
42[c]. B. विज्ञे　44[a]. B. आधुतम्

अवधूतं तदेव स्यादानीतं यदधः सकृत् ॥ ४४ ॥

॥ इत्यवधूतम् ॥

बहुशः कम्पनाच्छीघ्रमधः कम्पितमेव च ॥

॥ इति कम्पितम् ॥

आकम्पितं शनैरूर्ध्वमधस्ताद् द्विर्गतं यदि ॥ ४५ ॥

॥ इत्याकम्पितम् ॥

उद्वाहितं समुद्दिष्टं सकृदूर्ध्वं गतं शिरः ॥

॥ इत्युद्वाहितम् ॥

परिवाहितं तदेव स्याद् यस्य मण्डलवद्भ्रमिः ॥ ४६ ॥

॥ इति परिवाहि[41[a]]-तम् ॥

अञ्चितं तु शिरः पार्श्वे यत्किञ्चिन्नामितं भवेत् ॥

॥ इत्यञ्चितम् ॥

उत्क्षिप्तांऽसयुगं किञ्चिन्मग्नग्रीवं निहञ्चितम् ॥ ४७ ॥

॥ इति निहञ्चितम् ॥

पराङ्मुखं परावृत्तमुदितं पूर्वसूरिभिः ॥

॥ इति परावृत्तम् ॥

उत्क्षिप्तसंज्ञं तज्ज्ञेयं यत्र स्यादुच्चकैर्मुखम् ॥ ४८ ॥

॥ इत्युत्क्षिप्तम् ॥

अधोमुखं यथार्थं स्यात् शिथिलत्वात्तु लोलितम् ॥

॥ इत्यधोमुखं, लोलितं च ॥

॥ इति चतुर्दशविधं शिरः ॥

---

45[a]. B. कंपनी शीघ्र-　　45[b]. P. एव तत्
46[a]. P. समुद्दिष्टम्　　46[b]. B. ऊर्ध्वंगतम्　　46[c]. तदेव स्यद्
47[cd]. किंचीन्मग्नग्रीवम्　　48[c]. B. उत्क्षिप्तम्

शिरोभेदास्तु पञ्चाऽन्ये भवन्ति न मयोदिताः ॥ ४९ ॥

### [॥ अथ असंयुतहस्तभेदाः ॥]

पताकस्त्रिपताकोऽर्धचन्द्राख्यः कर्तरीमुखः ।
अराल-मुष्टि-शिखर-कपित्थ-खटकामुखाः ॥ ५० ॥

शुकतुण्डश्च काङ्गूलः पद्मकोशोऽलपल्लवः ।
सूचीमुखः सर्पशिराश्चतुरो मृगशीर्षकः ॥ ५१ ॥

हंसास्यो हंसपक्षश्च भ्रमरो मुकुलस्तथा ।
ऊर्णनाभश्च सन्दंशस्ताम्रचूडोऽपरः करः ॥ ५२ ॥

असंयुता मता हस्ताश्चतुर्विंशतिरित्यमी ।

### ॥ अथ संयुतहस्तभेदाः ॥

अभिनेयवशादेषां संयुतत्वं च जायते ॥ ५३ ॥

अञ्जलिश्च कपोताख्यः कर्कटः स्वस्तिकस्तथा ।
दोलपुष्पपुटोत्सङ्ग-खटकावर्धमानकः ॥ ५४ ॥

गजदन्तश्चावहित्थो निषधो मकरस्तथा ।
वर्धमान[ 41ᵇ ]-श्चेति हस्ताः संयुताश्च त्रयोदश ॥ ५५ ॥

एतेऽभिनयहस्ताः स्युः सप्तत्रिंशन्मुनेर्मताः ॥ ५६ ॥

### ॥ अथ नृत्यहस्ताः ॥

**चतुरस्रावथोद्वृत्तौ हस्तौ तलमुखाभिधौ ।**
**स्वस्तिकौ विप्रकीर्णाख्यावरालखटकामुखौ ॥ ५७ ॥**

**आविद्धवक्त्रौ सूच्यास्यौ रेचितावर्धरेचितौ ।**
**नितम्बौ पल्लवौ केशबन्धावुत्तानवञ्चितौ ॥ ५८ ॥**

---

50ᵃᵇ. त्रिपताकश्चार्द्ध- P. त्रिपताकार्द्ध- 50ᵈ B. -कपिष्ठ-
51ᵃ. P. तुंडश्चा- 51ᶜ. B. सुची-
52ᵇ. B. भ्रमरा 52ᶜ. B. उर्णनाभः
57ᵃ. BP. चतुरश्रौ 57ᶜ. B. विप्रकर्णाख्यौ
58ᵃ. B. सूच्यासौ 58ᵇ. B. रेचेतौ

लतारव्यौ करिहस्तश्च पक्षवञ्चितकाभिधौ ।
पक्षप्रद्योतकौ दण्डपक्षौ गरुडपक्षकौ ॥ ५९ ॥

ऊर्ध्वमण्डलिनौ हस्तौ पार्श्वमण्डलिनावपि ।
उरोमण्डलिनौ स्यातामुरःपार्श्वार्धमण्डलौ ॥ ६० ॥

मुष्टिकस्वस्तिकावन्यौ नलिनीपद्मकोशकौ ।
अलपद्मावुल्बणौ च ललितौ वलिताविति ॥ ६१ ॥

नृत्यहस्ता मतास्त्रिंशन्नृत्यमात्रोपयोगिनः ।

**[ ॥ अथ लक्षणानि ॥ ]**

पताकः कुञ्चिताङ्गुष्ठः प्रलम्बमिलिताङ्गुलिः ॥ ६२ ॥

**॥ इति पताकः ॥**

त्रिपताकः स एव स्याद्वक्रिताऽनामिकाङ्गुलिः ॥ ६३ ॥

**॥ इति त्रिपताकः ॥**

अर्धचन्द्रः करः स स्यादर्धचन्द्रसमाकृतिः ।
एकत्राङ्गुलिसङ्घाते यत्राऽङ्गुष्ठेऽन्यतः स्थिते ॥ ६४ ॥

**॥ इत्यर्धचन्द्रः ॥**

त्रिपताकस्य हस्तस्य मध्यमोपरि तर्जनी ।
यदाऽश्लिष्टा तदोद्दिष्टः सूरिभिः कर्तरीमुखः ॥ ६५ ॥

**॥ इति क [ 42[a] ]-र्तरीमुखः ॥**

धनुर्वत्तर्जनी नम्रा भिन्नार्धवलिताः पराः ।
अङ्गुष्ठः कुञ्चितो यस्य तमरालं विदुः करम् ॥ ६६ ॥

**॥ इत्यरालः ॥**

60ª. B. उर्ध्व–
61ª. B. मुष्टिकः
61ᵈ. B. वलितौ ललितौ
62ª. B. मनास्त्रिंशत्
62ᶜ. B. पताकः
64ᶜ. B. संघातो
66ª. P. धर्नुर्वत्
66ᵈ. B. विदुष्करम्

तलस्थाङ्गुल्योऽङ्गुष्ठपीडिता मुष्टिरुच्यते ।

**॥ इति मुष्टिः ॥**

स एवोर्ध्वीकृताङ्गुष्ठो भवेच्छिखरसंज्ञकः ॥ ६७ ॥

**॥ इति शिखरः ॥**

शिखराङ्गुष्ठतर्जन्योर्लग्नेऽग्रे स्यात्कपित्थकः ॥ ६८ ॥

**॥ इति कपित्थः ॥**

कपित्थस्य कनिष्ठा चाऽनामिका कुटिलीकृते ।
उत्क्षिप्ते विरले स्यातां तदा स्यात्खटकामुखः ॥ ६९ ॥

**॥ इति खटकामुखः ॥**

शुकास्यः स्यादरालस्य वक्रे तर्जन्यनामिके ॥ ७० ॥

**॥ इति शुकतुण्डः ॥**

काङ्गूलसंज्ञके वक्राऽनामिकोर्ध्वा कनीयसी ॥
ऊर्ध्वाश्लेताग्निसंस्थानास्तर्जन्यङ्गुष्ठमध्यमाः ॥ ७१ ॥

**॥ इति काङ्गूलः ॥**

विरलाः कुञ्चिताङ्गुष्ठाङ्गुल्यः स्युः पद्मकोशके ॥ ७२ ॥

**॥ इति पद्मकोशः ॥**

व्यावर्तिताख्यं करणं विधाय समवस्थिताः ।
यस्याङ्गुल्यः करतले पार्श्वगाः सोऽलपल्लवः ॥ ७३ ॥

**॥ इत्यलपल्लवः ॥**

खटकामुखतर्जन्या यत्रोर्ध्वे स्यात्प्रसारणं ।
स सूचीमुख उद्दिष्टो भरताद्यैस्तु सूरिभिः ॥ ७४ ॥

68ᵇ. B. कपिच्छकः ॥ इति कपीच्छः ॥
69ᵃ. B. कपिच्छस्य 69ᵇ. BP. यानामिका कुटली- 69ᶜ P. स्योताम्
70ᵃ. B. अलालस्य 70ᵇ. वक्रे अनामिके
71ᵇ B. अनामका, किनीयसी 71ᶜ. B. उर्ध्वा, -संस्थाना 71ᵈ. P. -मध्यतः
74ᵈ. P. -ताद्यैः पूर्वै-, B. तु

॥ इति सूचीमुखः ॥

पताकस्तु तले निम्नः स तु सर्पशिराः करः ॥ ७५ ॥

॥ इति सर्पशिराः ॥

अस्याङ्गुष्ठो म[ 42b ]-ध्यमाया मध्यपर्वान्तराश्रितः ।
ऊर्ध्वा कनीयसी यत्र करं तं चतुरं विदुः ॥ ७६ ॥

॥ इति चतुरः ॥

ऊर्ध्वाङ्गुष्ठकनिष्ठोऽधोन्याङ्गुल्यो मृगशीर्षकः ॥ ७७ ॥

॥ इति मृगशीर्षः ॥

तर्जनीमध्यमाङ्गुष्ठा लग्नास्त्रेताग्निसंस्थिताः ।
यत्रोर्ध्वं विरले शेषे स हंसास्यः करो मतः ॥ ७८ ॥

॥ इति हंसास्यः ॥

ऊर्ध्वायां तु कनिष्ठायामङ्गुष्ठे कुञ्चिते मनाक् ।
शेषाः किञ्चिन्नमन्मूला हंसपक्षोऽभिधीयते ॥ ७९ ॥

॥ इति हंसपक्षः ॥

अङ्गुष्ठमध्यमाङ्गुल्यौ लग्नाग्रे तर्जनी तथा ।
यत्रोर्ध्वे विरले शेषे स भवेद्भ्रमरः करः ॥ ८० ॥

॥ इति भ्रमरः ॥

साङ्गुष्ठाङ्गुलिसङ्घातो लग्नाग्रो मुकुले करे ।

॥ इति मुकुलः ॥

ऊर्णनाभः पद्मकोशपाणेरङ्गुलिकुञ्चनात् ॥ ८१ ॥

॥ इत्यूर्णनाभः ॥

---

75a. B. निम्रः
After 75b. B. इति शर्प्पशिरा ॥
76a. B. मध्यमा
76c. BP. उर्ध्वा
77a. B. उर्ध्वा–, -कनिष्ठे
78b. B. त्रिताग्निवत्स्थिताः
79ab. B. –ष्ठायां मंगु-
81a. B. उर्ण–
After 81. B. इति उर्ण–

लग्नाग्रेऽङ्गुष्ठतर्जन्यावरालस्य यदा पुनः ।
आभुग्नतलमध्यः स्यात्पाणिः सन्दंशसंज्ञकः ॥ ८२ ॥

**॥ इति सन्दंशः ॥**

अङ्गुष्ठमध्यमे लग्ने कनिष्ठाऽनामिके तले ।
तर्जनी यत्र वक्रा स्यात्स करस्ताम्रचूडकः ॥ ८३ ॥

**॥ इति ताम्रचूडः ॥**

**॥ इत्यसंयुता हस्ताः ॥**

असंयुताः कराः ख्याताः, संयुतानभिदध्महे ।
पताकतलसंश्लेषादन्योन्यमञ्जलिर्भवेत् ॥ ८४ ॥

**॥ इत्यञ्जलिः ॥**

कपोतः सम्मतो यत्र श्लिष्ट[ 43a ]-मूलाग्रपार्श्वकौ ।

**॥ इति कपोतः ॥**

अन्योन्यान्तरनिष्क्रान्ताः कर्कटेऽङ्गुलयः क्रमात् ॥ ८५ ॥

**॥ इति कर्कटः ॥**

उत्तानौ वामपार्श्वस्थावरालौ भवतः करौ ।
मणिबन्धनिबद्धौ चेत्तदोक्तः स्वस्तिकाभिधः । ८६ ॥

**॥ इति स्वस्तिकः ॥**

पताकौ लम्बमानौ तु श्लथांसौ दोलसंज्ञके ॥ ८७ ॥

**॥ इति दोलः ॥**

प्रख्यातोऽन्योन्यसंश्लेषात्करयोः सर्पशीर्षयोः ।
धीमता **हरिभक्तेन** हस्तः पुष्पपुटाभिधः ॥ ८८ ॥

**॥ इति पुष्पपुटः ॥**

---

82a. B. लग्नैग्रे–　　82c. BP. –मध्यो
After 82. P. ॥ इति सदंश ॥　　83d. P. ताम्र–
After 83. P. इति ताम्र–
85c. B. निक्रांताः　　85d. B. कर्कटेऽ°
86a. B. वामर्श्वस्थौ　　86c. B. निबंद्धौ

अरालौ तु यदा पाणी जायेते स्वस्तिकाकृती ।
अन्योन्यस्कन्धदेशस्थावुत्सङ्गः स्यात्स्वसंमु*खौ ॥ ८९ ॥

॥ इत्युत्सङ्गः ॥

अन्योन्याभिमुखौ यत्र भवेतां खटकामुखौ ।
स्वस्तिकौ मणिबन्धस्थौ खटकावर्धमानके ॥ ९० ॥

॥ इति खटकावर्धमानः ॥

सर्पशीर्षौ यदाऽऽकुञ्चकूर्परौ स्कन्धसंस्थितौ ।
अन्योन्याभिमुखौ स्यातां गजदन्तस्तदा भवेत् ॥ ९१ ॥

॥ इति गजदन्तः ॥

शुकतुण्डाभिधौ हस्तौ वक्षसोऽभिमुखौ कृतौ ।
अधोमुखावधो नीतौ हस्तेऽवहित्थसंज्ञके ॥ ९२ ॥

॥ इत्यवहित्थः ॥

निषधः स्यात्कपित्थेन मुकुलस्यैव वेष्टनात् ॥ ९३ ॥

॥ इति निषधः ॥

उपर्युपरि विन्यस्तावूर्ध्वाङ्गुष्ठावधोमुखौ ।
स्यातां यत्र पताकाख्यौ स स्यान्मकरसंज्ञकः ॥ ९४ ॥

॥ इति मकरः ॥

[ ज्ञेयो वै वर्धमानस्तु हंसपक्षौ पराङ्मुखौ । ]

॥ इति वर्धमानः ॥

[43[b]] एते प्रोक्ता युता हस्ता नृत्यहस्तानथ ब्रुवे ॥ ९५ ॥

समानकूर्परस्कन्धौ करौ च खटकामुखौ ।
पुरोमुखौ स्थितौ वक्षःपुरोदेशेऽङ्गुलाष्टके ॥

---

89[c]. BP. अन्योन्यौ
*P. Folios 67-73 are missing from here.
After 92. B. ॥ इत्यवहत्थिः ॥ ; after 93. B. ॥ इति निषिद्धः ॥
95[ab]. missing in B, supplied from Bharata
95[d]. B. अथा ब्रुमे 96[b]. B. षटका-

चतुरस्राविति प्रोक्तौ **नाट्यशास्त्रविदां वरैः** ॥ ९६ ॥

**॥ इति चतुरस्रौ ॥**

हंसपक्षौ करौ यत्र व्यावृत्तौ तालवृन्तवत् ।
उद्वृत्तौ **मुनिभिः** ख्यातौ वक्षसोऽभिमुखौ स्थितौ ॥ ९७ ॥

**॥ इत्युद्वृत्तौ ॥**

हंसपक्षौ यदा हस्तौ स्थितौ व्यस्तौ स्वपार्श्वयोः ।
सन्मुखौ तलवक्त्रौ तौ दधाते पुष्करध्वनौ ॥ ९८ ॥

**॥ इति तलमुखौ ॥**

तावेव मणिबन्धस्थौ स्वस्तिकौ स्वस्तिकाकृती ॥

**॥ इति स्वतिकौ ॥**

स्वस्तिकौ मणिबन्धात्तु च्युतौ तौ विप्रकीर्णकौ ॥ ९९ ॥

**॥ इति विप्रकीर्णौ ॥**

तिर्यक्प्रसारितोऽरालः पुरस्तात्खटकामुखः ।
पराङ्मुखः स्यादुरसः किञ्चिदभ्युन्नताननः ॥ १०० ॥
विन्यस्तौ व्यत्ययेनैतौ यद्वा स्वस्थानसंस्थितौ ।
सव्यापसव्यतः स्यातामरालखटकामुखौ ॥ १०१ ॥

**॥ इत्यरालखटकामुखौ ॥**

भुजांसकूर्पराग्रैस्तु वक्रावावर्तितौ करौ ।
पराङ्मुखतलाविद्धौ स्यातामाविद्धवक्त्रकौ ॥ १०२ ॥

**॥ इत्याविद्धवक्त्रौ ॥**

सर्पशीर्षौ करौ यत्र स्यातां स्वस्तिकसंस्थितौ ।
मध्यप्रसारिताङ्गुष्ठौ प्रोक्तौ सूचीमुखौ **बुधैः** ॥ १०३ ॥

**॥ इति सू [ 44ª ]-चीमुखौ ॥**

---

99ᵇ. B. स्वस्तिको
100ª. B. -रितस्तालः
100ᵈ. B. अप्युन्न-
101ª. B. व्यन्ययेनेतौ
101ᵈ. and after B. -षटका
103ᵈ. B, सुची-

**भरताद्ये** रेचितौ ख्यातौ हंसपक्षौ द्रुतभ्रमौ ॥

**॥ इति रेचितौ ॥**

एकेन चतुरस्रेण तावेव ह्यर्धरेचितौ ॥ १०४ ॥

**॥ इत्यर्धरेचितौ ॥**

अंसदेशाद्विनिष्क्रान्तौ त्रिपताकौ नितम्बकौ ॥

**॥ इति नितम्बौ ॥**

स्वस्तिकाकृतितां यातौ पताकौ पल्लवौ मतौ ॥ १०५ ॥

**॥ इति पल्लवौ ॥**

[ केशदेशाद्विनिष्क्रान्तौ परिपार्श्वोत्थितौ तथा ।
विज्ञेयौ केशबन्धौ तु करा**वाचार्यसम्मतौ** ॥ १०६ ॥ ]

**॥ इति केशबन्धौ ॥**

कपोलांससमीपस्थौ त्रिपताकौ यदा करौ ।
तिर्यक्प्रसारितौ किञ्चित् स्यातावुत्तानवञ्चितौ ॥ १०७ ॥

**॥ इत्युत्तानवञ्चितौ ॥**

हस्तौ प्रसारितौ तिर्यक्पार्श्वस्थौ तौ लताकरौ ॥ १०८ ॥

**॥ इति लताकरौ ॥**

पार्श्वतो लोलितः पार्श्वो लताहस्तो यदोन्नतः ।
कर्णेभ्यस्त्रिपताकः स्यात्करिहस्तौ तदा करौ ॥ १०९ ॥

**॥ इति करिहस्तौ ॥**

त्रिपताकौ कटीशीर्षन्यस्ताग्रौ पक्षवञ्चितौ ।

**॥ इति पक्षवञ्चितौ ॥**

104[b]. B. द्रुतभ्रमः 104[c]. B. चतुरस्त्रेण
105[a]. B विनिःक्रान्तौ
106 B. gives only :–' पार्श्वतः केशबंधानितंबकौ '; full st. supplied from Bharata.
109[b]. B. लताहस्तौ 110[a]. B. कटीर्शीर्षे

परावृत्तौ तु तावेव पक्षप्रद्योतकौ मतौ ॥ ११० ॥

॥ इति पक्षप्रद्योतकौ ॥

व्यावृत्तौ परिवृत्तौ च प्रसारितभुजद्वये ।
हंसपक्षाभिधौ तौ तु दण्डपक्षौ स्मृतौ बुधैः ॥ १११ ॥

॥ इति दण्डपक्षौ ॥

कुञ्चितौ कूर्परौ किञ्चित्कटिसंस्थावधोमुखौ ।
पताकौ त्रिपताकौ वा करौ गरुडपक्षकौ ॥ ११२ ॥

॥ इति गरुडपक्षौ ॥

अरालावूर्ध्वमावृत्तावूर्ध्वमण्डलिनौ करौ ॥

॥ [44b] इत्यूर्ध्वमण्डलिनौ ॥

तावेव पार्श्वनिहतौ पार्श्वमण्डलिनौ मतौ ॥ ११३ ॥

॥ इति पार्श्वमण्डलिनौ ॥

उद्वेष्टितो यदैकः स्यादपरस्त्वपवेष्टितः ।
वक्षःस्थलसमावृत्तावुरोमण्डलिनौ करौ ॥ ११४ ॥

॥ इत्युरोमण्डलिनौ ॥

स्यातामुरोऽर्धपार्श्वार्धभ्रमणेन यथाक्रमम् ।
अलपल्लवकारालावुरःपार्श्वार्धमण्डलौ ॥ ११५ ॥

॥ इत्युरःपार्श्वार्धमण्डलौ ॥

कुञ्चिताकुञ्चितौ यत्र खटकामुखसंज्ञकौ ।
भवेतां मणिबन्धान्ते मुष्टिकस्वस्तिकौ मतौ ॥ ११६ ॥

110c. B. परावृतौ
110d. B. पक्षपद्योतकौ; after 110. B. इति पक्षप्रद्यौ–
111d. B. स्पृतौ; after 111. B. इ दण्ड– ॥
112a. B. कुर्परौ 112b. B. किटि–
After 113ab. B. इत्युर्ध्वे–; after 113. B. इति पार्श्वमाण्ड–
114c. B. समावृत्तौ 114d. B. उरोमंड–
115a. B. उरोद्ध

॥ इति मुष्टिकस्वस्तिकौ ॥

पद्मकोशाभिधौ हस्तौ व्यावृत्तपरिवर्तकौ ।
आजानुलम्बितौ प्रोक्तौ नलिनीपद्मकोशकौ ॥ ११७ ॥

॥ इति नलिनीपद्मकोशौ ॥

उद्वेष्टितक्रियौ स्यातां हस्तौ यद्यलपद्मकौ ।
ऊर्ध्वं प्रसारिताविद्धौ ज्ञातव्यावुल्बणौ करौ ॥ ११८ ॥

॥ इत्युल्बणौ ॥

शीर्षदेशनिवेशेन पल्लवौ ललितौ करौ ।

॥ इति ललितौ ॥

मुष्टिकस्वस्तिकौ मूर्ध्नि विवृत्तौ वलिताविति ॥ ११९ ॥

॥ इति वलितौ ॥

॥ इति त्रिंशन्नृत्यहस्ताः ॥

समोऽञ्चितः कुञ्चितश्च सूच्यग्रतलसञ्चरः ।
उद्घट्टितश्चेति **बुधैः** षड्विधश्चरणो मतः ॥ १२० ॥
भूमौ स्थितः स्वभावेन स समः **सद्भि**रुच्यते ॥ १२१ ॥

॥ इति समः ॥

भूस्थपार्ष्णिः समुत्क्षिप्ताग्रतलः प्रसृ[45a]ताङ्गुलिः ।
**मतङ्गादिभिराचार्यैः** समुद्दिष्टोऽञ्चिताभिधः ॥ १२२ ॥

॥ इत्यञ्चितः ॥

पार्ष्णिर्मध्ये तथा क्षिप्ता कुञ्चिते कुञ्चिताङ्गुलिः ॥ १२३ ॥

॥ इति कुञ्चितः ॥

117c. B. आज्ञा-
118c. B. ऊर्द्ध्वम्
118d. & after-B. उल्वणौ
119b. B. करौ इतौ करौ ।
119d. B. ललिताविति
after 119 B. ॥ इति त्रौंमन् ॥
120a. B. समोचितः
122a B. समुक्षिप्ता-

स्वाभाविकोऽपसव्योऽन्यो भुव्यङ्गुष्ठाग्रसंस्थितः ।
उत्क्षिप्तेतरभागोऽसौ सूची नूपुरबन्धने ॥ १२४ ॥

॥ इति सूची ॥

यत्रोत्क्षिप्ता तु पार्ष्णिः स्यात्प्रसृताङ्गुष्ठकस्तथा ।
अङ्गुल्यो न्यञ्चिताः प्रोक्तः पादोऽग्रतलसञ्चरः ॥ १२५ ॥

॥ इत्यग्रतलसञ्चरः ॥

स्थित्वा पादतलाग्रेण यदा भूमौ निपात्यते ।
असकृद्वा सकृत्पार्ष्णिर्भवेदुद्घट्टितस्तदा ॥ १२६ ॥

॥ इत्युद्घट्टितः ॥

॥ इति चरणभेदाः ॥

वक्षःपार्श्वादिभेदा ये नोक्ता विस्तरतो भिया ।
नृत्यादिषु भवेत्प्रायस्तदुत्पत्तिः स्वभावतः ॥
सङ्ख्या सामान्यतस्तेषां सर्वेषां प्रतिपाद्यते ॥ १२७ ॥

समुद्दिष्टाः शिरोभेदा **बुधै**रेकोनविंशतिः ।
सर्वेऽपि मिलिता हस्तास्त्रिषष्टिः **सूरिभि**र्मताः ॥ १२८ ॥

वक्षः पञ्चविधं ज्ञेयं पार्श्वं पञ्चविधं तथा ।
कटी च पञ्चधा प्रोक्ता चरणस्तु त्रयोदश ॥ १२९ ॥

स्कन्धौ पञ्चविधौ ग्रीवा नवधा **मुनिभि**र्मता ।
बाहुः षोडशधा ज्ञेयो जठरं तु चतुर्विधम् ॥ १३० ॥

पञ्चधोरुः समुद्दिष्टो जङ्घा दशविधा मता ।
पञ्चधा मणिबन्धः स्यात् सप्तधा जानु संमतम् ॥ १३१ ॥

भूषा नानाविधा प्रोक्ता यथा वेषोपयोगिनी ।
षट्त्रिंशद् द[ 45b ]-ष्टिभेदाः स्युर्भ्रूभेदाः सप्त सम्मताः ॥ १३२ ॥

---

125a B. यत्रोक्षिप्ता 125c. B. न्यंञ्चितः 125d. B. पादौ
After 125 B. ॥ इति तलसंचरः ॥ 126b B. निपातयेत्. 126d. B. उद्घटितः
128b. B. एकानविंशति 130c. B. षोडश 131d. B. जातु
132c. B. षड्विंश 132d. B. भ्रुमेदा

पुटौ नवविधौ ख्यातौ मुनिभिर्भरतादिभिः ।
ताराकर्माण्यथो सप्तदशधा **सूरयो** जगुः ॥ १३३ ॥

कपोलौ षड्विधौ, नासा षोढा, तु षड्विधोऽनिलः ॥
अधरौ दशधा, दन्तकर्माण्यष्टौ, विदुर्**बुधाः** ॥ १३४ ॥

जिह्वा षोढा, ऽष्टधा षोढा चिबुकं वदनं क्रमात् ।
अष्टधा पार्ष्णिरुद्दिष्टा गुल्फौ पञ्चविधौ मतौ ॥ १३५ ॥

सप्तधा तु कराङ्गुल्यः पादाङ्गुल्यस्तु पञ्चधा ।
षोढा तलं, चतुर्धैव मुखरागः प्रकीर्तितः ॥ १३६ ॥

प्रोक्ताः पञ्चदश **प्राज्ञैः** प्रचाराः करयोः क्रमात् ।
करणान्यत्र चत्वारि करकर्माणि विंशतिः ॥ १३७ ॥

ख्यातानि **नाट्यशास्त्रेषु** तत्क्षेत्राणि त्रयोदश ।
इत्थमङ्गादिषु प्रोक्ता मया सङ्ख्या यथाक्रमम् ।
**मुनीनां** मतमादाय सम्यग्बोधाय धीमताम् ॥ १३८ ॥

**॥ इत्यङ्गादिसङ्ख्या ॥**

आदौ श्रीपरमेश्वरस्य विधिवद्ध्यानं विधाय प्रभो
रागाणां च गुरोश्च हर्षितमनास्त्यक्त्वा पुनर्व्यग्रताम् ।
स्थित्वा लोकपतेः पुरः स्थिरतरग्रीवासनः प्रोज्ज्वलः
सङ्गीतं स्वरनिर्भरातिरुचिरं कुर्यात्सभामण्डपे ॥ १३९ ॥

नाट्यं नृत्यं तथा नृत्तं ताण्डवं लास्यमेव च ।
विषमं विकटं नृत्ये लघु भेदत्रयं परम् ॥
पेरणी गौण्डली चेति नाट्यं दशविधं स्मृतम् ॥ १४० ॥

चतुर्धाऽभिनयस्तत्र रसभावसमन्वितः ।
आ [ 46ᵃ ]-ङ्गिको वाचिकः प्रोक्तस्तथाऽऽहार्यस्तु सात्त्विकः ॥ १४१ ॥

---

133ᵃ. B. नविविधौ 135ᶜ. B. पार्णिः 136ᶜ. B. चतुर्थैव
137ᵈ. B. विशति 139ᵃ. B. विधिवध्यानं, प्रभोः 139ᵈ. B. सरनिर्भरा-
140ᵉ. B. पेसणी 141ᵃ. B. अभिनयंस्तत्र 141ᵈ. B. सात्विकः

अङ्गैः प्रदर्शितो यस्तु स एवाङ्गिकसंज्ञकः ।
वाचा विरचितः काव्यनाटकादिस्तु वाचिकः ॥ १४२ ॥

भवेदाहार्यको हारकेयूरादिविभूषणैः ।
सात्त्विकः सात्त्विकैर्भावैर्भावुकेन विभावितः ॥ १४३ ॥

ललितैः करविन्यासैस्तथा मृद्वङ्गचेष्टितैः ।
अभिनेयं तु नाट्यज्ञै रसभावसमन्वितैः ॥ १४४ ॥

उत्तानौ तु करौ कृत्वा स्वस्तिकौ पार्श्वसंस्थितौ ।
उद्वाहितेन शिरसा तथा चोर्ध्वनिरीक्षणात् ॥ १४५ ॥

प्रभातं गगनं रात्रिं प्रदोषं दिवसं तथा ।
जन्तून् व्यस्तान् समस्तांश्च विस्तीर्णांश्च जलाशयान् ॥ १४६ ॥

दिशो ग्रहान् सनक्षत्रान् दृष्टं यच्च भवेदिह ।
तान्येवमभिनेयानि नानाभावरसार्थतः ॥ १४७ ॥

एभिरेव करैर्भूयस्तेनैव शिरसा तथा ।
अधो निरीक्षणेनाथ भूमिष्ठं सम्प्रयोजयेत् ॥ १४८ ॥

स्पर्शस्य ग्रहणाच्चैव तथोल्लासनकादपि ।
चन्द्रज्योत्स्नां सुखं वायुं रसगन्धौ च निर्दिशेत् ॥ १४९ ॥

वस्त्रावगुण्ठनात्सूर्यं रजो धूमानिलौ तथा ।
भूमितापं तथाऽब्दं च कुर्याच्छायाभिलाषतः ॥ १५० ॥

ऊर्ध्वाऽऽकेकरदृष्टिस्तु मध्याह्ने सूर्यमादिशेत् ।
उदयास्तगतं चैव गम्भीरार्थैः प्रदर्शयेत् ॥ १५१ ॥

---

142ᵃ. B. अगैं    144ᵃ. B. –वन्यासैः    145ᶜ. B. उद्वाहिते
146ᵃᵇ. B. रात्रिमदोषं    146ᶜ. B. जंतुभ्यस्तात्समस्तांश्च
147ᵇ. B. यष्ट    147ᶜ. B. अभितेयानि
148ᶜ. B. अधा    148ᵈ. B. भूयिष्टम्
149ᵇ. B. उल्लुकशदर्शनात्    149ᵈ. B. वायुरसगन्धो व
150ᵃ. B. वस्त्रावगुंष्ट–    150ᵈ. B. कुर्या छाया–
151ᵃ. B. उर्ध्व, केकर, दृष्टिष्ठु,    151ᵇ. B. मध्यान्ह–;
151ᶜ. B. उदयास्तंम्;    151ᵈ, B. गंभीरार्धैः

यानि सौम्यार्थयुक्तानि सुखभावकृतानि च ।
गात्रस्पर्शैः सरो[ 46b ]-माञ्चैस्तेषामभिनयो भवेत् ॥ १५२ ॥

यानि स्युस्तीक्ष्णरूपाणि तानि चाभिनयेन्नरः ।
अस्पर्शनसमुद्वेगैस्तथा मुखविकूणनैः ॥ १५३ ॥

विद्युदुल्का घनरवो विस्फुलिङ्गार्चिषस्तथा ।
त्रस्ताङ्गाक्षिनिमेषैश्च दर्शनीयानि योक्तृभिः ॥ १५४ ॥

भ्रमणाच्च प्रदेशिन्या दृष्टेः परिगमेन च ।
पीडनाच्चालपद्मस्य सर्वार्थग्रहणं भवेत् ॥ १५५ ॥

यद्यस्य चिह्नं वेषो वा कर्म वा रूपमेव वा ।
निर्देश्यः स ऋतुस्तेन हीष्टानिष्टार्थदर्शनात् ॥ १५६ ॥

शुकसारिकाऽन्यपुष्टान् सूक्ष्मानन्यांश्च पक्षिणः ।
पक्षाङ्गहारगतिभिर्दर्शयेन्नाट्यकोविदः ॥ १५७ ॥

कृत्वा स्वस्तिकसंस्थानौ पद्मकोशावधोमुखौ ।
सिंहर्क्षवानरव्याघ्रश्वापदानां निरूपणम् ॥ १५८ ॥

खरोष्ट्रगोश्वाश्वतरान् सिंहव्याघ्रगजादिकान् ।
महापशूनङ्गहारैर्गतिभिश्च प्रदर्शयेत् ॥ १५९ ॥

परावृत्तेन शिरसा नेत्रनासाविकूणनैः ।
चक्षुषश्चाऽप्रसादेन ह्यनिष्टमभिनिर्दिशेत् ॥ १६० ॥

इत्थं लोकोपचारेण स्वबुद्धिविभवेन च ।
नाट्योपकरणानीह बुधः सम्यक् प्रयोजयेत् ॥

152c. B. गात्रसर्णैः
152d. B. तिषाम्
153b. B. यानि चालनयेत्
153c. B. समुद्वेगोस्तथा
154b. B. विस्युलिंगार्चिषः
154d. B. योक्तृभिः भ्रमणाच्च ।
155a. B. प्रदिशिन्या
156c. B. निर्देश्यः सत्सतुः
156d. B. ह्रिष्टा
157c. B. अंगहर-
158c. B. सिहर्क्षव्याघ्र-
158d. B. श्वापदानाम्
159a. B. अश्वेतरान्
159d. B. गीतिभिः
161c. B. नाट्यौप-

प्रोक्तानि न मया यानि लोकाद् ग्राह्यानि तान्यपि ॥ १६१ ॥

॥ **इत्यभिनयविवेकः** ॥

रेखा च स्थिरता वेगो भ्रमरी दृष्टिरस्रयः ।
प्रीतिर्मेधा वचो गीतं नृत्ये प्राणा दशोदि[ 47a ]-ताः ॥ १६२ ॥

॥ **इति नृत्यप्राणाः** ॥

**केचित्** पुष्पाञ्जलौ सङ्ख्यां पुष्पाणां मेनिरे स्फुटम् ।
एकविंशति**मन्ये** तु नियमं नावचक्षिरे ॥ १६३ ॥

गाङ्गेयरजतोत्पन्नैः पुष्पैः **कश्चिद्** दधाति तम् ।
**कश्चित्** सुगन्धपुष्पैस्तु करोति कुसुमाञ्जलिम् ॥ १६४ ॥

**कश्चि**न्नानाविधैः पुष्पैर्विदधाति तमादरात् ।
रङ्गपीठान्तरस्थाय लोकेशाय समर्पयेत् ॥ १६५ ॥

अग्रतः क्षेपणाद्राजा पीड्यते दक्षिणे सभा ।
गुरुः पृष्ठे ततो रङ्गपीठान्तस्त्वभितः क्षिपेत् ॥ १६६ ॥

मध्यमं स्वरमाश्रित्य सूत्रधारः पठेत्तदा ।
नान्दीं पदैर्द्वादशभिरष्टभिर्वा विभूषिताम् ॥ १६७ ॥

॥ **इति पुष्पाञ्जलिविवेकः** ॥

शुभे लग्ने च नक्षत्रे श्रमः प्रारभ्यते बुधैः ॥ १६८ ॥

विष्णुब्रह्मेशविघ्नेशभारत्यादीन् सुरोत्तमान् ।
रङ्गं कन्यां च वाद्यानि गुरुं स्तम्भौ सदण्डिकौ ॥
पूजयित्वा सुगन्धाद्यैर्नानापु*ष्पादिभिः क्रमात् ॥ १६९ ॥

शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गपटहादिभिः ।
तिरश्चीनां करग्राह्यामवलम्ब्याय दण्डिकाम् ॥ १७० ॥

161c. B. प्रोक्तानि मया यानि 161d. B. लोकात् 164b. B. कश्चिदधाति
165d. B. लोकेशाय 166b. B. सभाः 166d. B. स्वमितः
167c. B. नांदीपदैद्वादश- 169c. B. कंन्यां 169d. B. सदडिको
169e. B. पूयित्वा सुगंधाद्यैः *P. Folio 74 begins from here onwards.
170e. B. तिराश्चीनाम्

स्तम्भयुग्मोपरि न्यस्य नटीहृदयसम्मिताम् ।
व्यायाममभ्यसेन्मन्दं नटी दण्डयवलम्बिनी ॥
शिक्षेत विविधं लास्यं सौष्ठवाङ्गविराजितम् ॥ १७१ ॥

अङ्गसौष्ठवसम्पन्नैरङ्गहारैर्विभूषितम् ।
व्यायामं कारयेत्सम्यग्लयताल[ $47^{b}$ ]-मनोहरम् ॥ १७२ ॥

सौष्ठवेऽतिप्रयत्नस्तु कार्यो नाटकवेदिभिः ।
शोभा सर्वैव नित्यं हि सौष्ठवं समुपाश्रिता ॥ १७३ ॥

नैव सौष्ठवहीनाङ्गं शोभते नाट्यनृत्ययोः ।
अचञ्चलमकुब्जं च सन्नगात्रं तथैव च ॥
नात्युच्चनीचपादं च सौष्ठवाङ्गं प्रयोजयेत् ॥ १७४ ॥

कटी कर्णसमा यत्र कूर्परांसशिरस्तथा ।
समुन्नतमुरश्चैव सौष्ठवं **मुनयो** जगुः ॥ १७५ ॥

तैलाभ्यक्तेन गात्रेण यवागूमृदितेन च ।
श्रमं हि कारयेद् धीमान् प्रातरेव विशेषतः ॥ १७६ ॥

अशुद्धकायं प्रक्लान्तमतीव क्षुत्पिपासितम् ।
अतिभुक्तं तथा पीतं नैव कार्यः श्रमो बुधैः ॥ १७७ ॥

हस्तोपरि न्यसेद् दृष्टिं, यत्र दृष्टिस्ततो मनः ।
मनसि स्थापयेद्भावं यत्र भावो रसस्ततः ॥ १७८ ॥

गीतमालम्बयेदङ्गैरर्थं हस्तेन दर्शयेत् ।
नानाभावं तु नेत्राभ्यामङ्घ्रिभ्यां तालदर्शनम् ॥ १७९ ॥

---

$171^{d}$. B. दंड्यवि-
$171^{e}$. B. शिक्षेत्
After 171 B. अंगसौष्ठवांगविराजितम्
$172^{a}$. B.
$173^{a}$. B. प्रयत्नेस्तु
$173^{b}$. B. -विदिभिः
$174^{a}$. B. सोष्टव-
$174^{c}$. B. सकुब्जम्
$174^{d}$. B. सन्न-
$174^{f}$. B. सोष्ठवांगम्
$175^{a}$. B. यंत्र
$175^{b}$. P. कूर्परांसः
$175^{d}$. B. नगुः
$177^{a}$. B. -कामं प्रत्कांतम्
$178^{a}$. B. न्यसेत्, P. दृष्टिः
$178^{c}$. B. स्थापयेत्
$179^{cd}$. B. नेत्राभ्यां मंघ्रिभ्याम्

मन्दमन्दचलद्दीपशिखेव स्वाङ्गचालनम् ।
**नृत्यतत्त्वविचारज्ञैः** सूलूशब्द इति स्मृतः ॥ १८० ॥
भूमेरूर्ध्वं स्थितिः कव्या यदि तालद्वये क्रमात् ।
तालत्रये चतुस्ताले तलमध्योर्ध्वसञ्ज्ञकाः ॥ १८१ ॥
हंसहंसगजाश्वाश्च मीनखञ्जनकुर्कुटाः ।
कुरङ्गस्तित्तिरो लावो गतयो ता दशोदिताः ॥ १८२ ॥
[ माल्यकारो यथा माल्यं बध्नाति कुसुमोत्करैः ।
सुधीः कुर्यात्तथा नाट्यमङ्गोपाङ्गै रसादिभिः ॥ ] १८३ ॥

## ॥ इति भ्रमविधिः ॥

कस्तूरीतिलकं च मुग्धकबरी नेत्राञ्जनं रञ्जनं
नासामौक्तिक[ 48ª ]-हारकङ्कणरणन्मञ्जीरमुद्रादिकम् ।
श्रीखण्डादिविलेपनं प्रविलसच्चीनाम्बरं चातुरी
नर्तक्याः किल मण्डनानि दधते शोभां परां नान्यथा ॥ १८४ ॥

## ॥ इति मण्डनानि ॥

नर्तक्याः पदपाणिमध्यचिबुकश्रोणीकपोलाङ्गुलि-
ग्रीवाभ्रूवदनेक्षणादिचलनं संवादि सञ्जायते ।
मार्दङ्गध्वनिभिः सहैव चपलप्रोत्तालतालोद्भवैः
पाटैरुद्भटतालधारिनिनदैरन्यैर्निनादैरपि ॥ १८५ ॥
किञ्चिन्नम्रकिरीटकोटिवलितग्रीवं चलत्कुण्डलं
व्यावल्गन्मणिनूपुरध्वनि पुरः पश्चाद्व्रजन्ती द्रुतम् ।

180ᵇ. BP. शिखारेखांग- 180ᶜ. B. -तत्व- 180ᵈ. B. सूलु-, P. सूछु.-
181ª. B. भूमेरूर्ध्वस्थितिकया 181ᵈ. P. मध्योर्ध्वम्
182ᵇ. P. -कुक्कुटाः 182ᵈ. B. गतयो तौ दशोदितम् P. गतपोतो
183. missing in B; supplied from P.
184ª. B. मुग्धवरी P. नेजत्रांजनम् 184ᵇ. B. नाशा-
185ª. B. -श्रोणि- 185ᵈ. B. पाटैक-,
अन्यैर्निनादैः missing in B, P. अन्यैनिनादैः 186ᵇ. B. व्याकलान्मणि-

तिर्यक् क्षिप्तकफोणिदक्षिणकुचा चञ्चद्दुकूलाऽञ्चलं
व्यालोलाङ्गुलि वामपाणिवलयश्रेणीकलक्काणितम् ॥ १८६ ॥

मुग्धा मत्तमृगेन्द्रमध्यविलसत्काञ्चीकलक्काणिता
मध्ये वामकरं निधाय सरलं कृत्वा भुजं दक्षिणम् ।
उद्यत्काञ्चनचित्रिताञ्चलपटी शोभायमाना नटी
स्तोकं भूमितले स्थिरा बहुतरं लोला नभोमण्डले ॥ १८७ ॥

काचिन्नृत्यविधौ विलम्बितमपि क्षिप्रं च नानाविधां
यत्यादिप्रचुरप्रबन्धरचनां कृत्वा मृदङ्गे मुदा ।
चञ्चत्पाणि चलत्पृथुस्तनयुगं स्वेदार्द्रगण्डस्थलं
तत्तद्भूषणभूषिताङ्गरुचिरा रङ्गस्थले राजते ॥ १८८ ॥

उद्भ्रूवल्लि दरप्रसारितमुखाम्भोजं चलत्कुण्डलं
[ 48b ] किञ्चिच्चञ्चलमौलि चारुसरलग्रीवं प्रफुल्लस्तनम् ।
पर्यायेण विधाय पाणियुगलव्यापारमेणीदृशा
रागाऽऽलापविधानमञ्जुलतरं गीतं मुदा गीयते ॥ १८९ ॥

भूमीपालपुरोऽष्टहस्तमितभूभागे मृदङ्गादिका
सामग्री सकला विभाति सकला नाट्योपयुक्ता भृशम् ।
तन्मध्ये रुचिराऽङ्गहारविधिना नृत्यं विधत्ते नटी
गीर्वाणप्रमदा सनादसमदा गन्धर्ववृन्दे यथा ॥ १९० ॥

नानालास्यविलम्बितद्रुततमप्रस्थानतो निर्भरं
नर्तक्या वदनं विभाति चपलं नेत्रद्वयं चञ्चलम् ।
चञ्चच्चारुतरङ्गसङ्गतरलं फुल्लारविन्दं स्फुर-
न्माध्वीलोभविलोलषट्पदयुगव्यासक्तमध्यं किमु ॥ १९१ ॥

सम्यक् सौधमयी विभाति धरणी रङ्गस्य गोरोचना-
गौराङ्गोज्ज्वलभासमानवपुषा विद्योतते नर्तकी ।

186c. BP. पांचत्–, 186d. B. –क्वलक्काणितम् 187c. B. –चित्रतां–, P. –विन्त्रितां– 187d. B. वहुतरम् 188a. P. विलंबितमणि 190d. B. समदाम् 191b. P. नृत्तक्या 192b. B. गौरांगौज्वल–

सञ्चारः शरदम्बुवाहविषये विद्युल्लतायाः स्फुटं
जातश्चेदनयोस्तदैव तुलनां प्राप्नोति नैवान्यथा ॥ १९२ ॥

अङ्गोपाङ्गगताऽगताऽद्भुतचमत्कारेण हारेण च
श्रीखण्डाद्यनुलेपनेन कबरीभारेण चारुभ्रुवा ।
पीयूषाधिकमञ्जुलेन वचसा चाञ्चल्यभाजा दृशा
चेतांसि त्वरितं जहार तरुणी रङ्गस्थलस्थायिनाम् ॥ १९३ ॥

कृत्वा सम्प्लुतमेकहस्तचरणाम्भोजं द्वितीयं करं
नम्रं रेचनितं [ 49ª ] विधाय मधुरं वाद्यैर्मृदङ्गादिभिः ।
नानाविभ्रमचेष्टिताकुलपदं स्मेरानना नर्तकी
नाट्योक्तैः करणैर्विदग्धगतिभिर्लीलायिता नृत्यति ॥ १९४ ॥

॥ इति नाट्यादि ॥

**भारतीयमतं** वीक्ष्य नत्वा कृष्णपदाम्बुजम् ।
लिख्यते क्रमशः कामं करणादिकलक्षणम् ॥ १९५ ॥

करणान्यङ्गहाराश्च चार्यश्च रेचकास्ततः ।
मण्डलस्थानयोर्भेदा लास्याङ्गानि च वृत्तयः ॥
एकदुक्तं **पुराचार्यै**र्नानानाट्यप्रदीपकम् ॥ १९६ ॥

[ ॥ अथ करणानि ॥ ]

पार्श्वे पुष्पपुटो वामे पादोऽग्रतलसञ्चरः ।
तथा च सन्नतं पार्श्वं तलपुष्पपुटं मतम् ॥ १९७ ॥

॥ इति तलपुष्पपुटम् ॥

कुञ्चितौ मणिबन्धे तु व्यावृत्तपरिवर्तितौ ।
यत्रोर्वोः पतितौ पाणी वर्तितं करणं भवेत् ॥ १९८ ॥

॥ इति वर्तितम् ॥

192ᶜ. B. -अंग्र- 192ᵈ. B. जातश्चेद-, तदैव 193ᵇ. B. अनुलेप-
196ª. B. -हारश्च 196ᵇ. B वीर्यश्च, P. रचकाः
After 197 B. इति...पुष्प- ॥
198ᵇ. B. -वृत्तितौ P. वृत्तितौ 198ᶜ. P. यत्रोर्वौ

शुकवक्त्रौ करौ यत्र व्यावृत्तपरिवर्तितौ।
ऊरू च वलितौ स्यातां वलितोरु तदुच्यते ॥ १९९ ॥

**॥ इति वलितोरु ॥**

आवर्त्य शुकवक्त्राख्यमूरुपृष्ठे क्षिपेद्यदा।
वक्षःस्थो वामहस्तः स्यादपविद्धाभिधं मतम् ॥ २०० ॥

**॥ इत्यपविद्धम् ॥**

पादौ समनखौ श्लिष्टौ पाणी स्यातां प्रलम्बितौ।
गात्रं स्वाभाविकं यत्र स्यातं समनखाभिधम् ॥ २०१ ॥

**॥ इति समनखम् ॥**

यत्राञ्जलिस्तु वक्षःस्थस्तथा ग्रीवा नता कृता।
निहञ्चितांसकूटं तु ली[ 49[b] ]-नं तत्करणं मतम् ॥ २०२

**॥ इति लीनम् ॥**

स्वस्तिकौ रेचिताविद्धौ विश्लिष्टौ कटिसंस्थितौ।
यत्र तत्करणं स्यातं बुधैः स्वस्तिकरेचितम् ॥ २०३ ॥

**॥ इति स्वस्तिकरेचितम् ॥**

हस्तौ च स्वस्तिकौ यत्र प्राङ्मुखोर्ध्वतलौ समौ।
मण्डलं स्थानकं यत्र मण्डलस्वस्तिकं मतम् ॥ २०४ ॥

**॥ इति मण्डलस्वस्तिकम् ॥**

निकुट्टितौ करौ यत्र स्वबाहुशिरसोत्तरे।
निकुट्टितौ तथा चाङ्घ्री समुद्दिष्टं निकुट्टितम् ॥ २०५ ॥

**[॥ इति निकुट्टितम् ॥]**

199[c]. P. उरू 199[d]. B. वलितोरुः; after 199 B. इति...तोरुः ॥
200[b]. BP. उरु- 200[c]. BP. वक्षस्थो 202[a]. B. जत्रांजलिः.
204[c]. B. मंडलस्था- After 204 P. इति......लास्विस्तिकाम् ॥
205[c]. B. चांह्री After 205 ॥ इति निकुट्टितम् ॥ not found in B

अञ्चितो बाहुशिरसि हस्तस्त्वभिमुखाङ्गुलिः ।
निकुट्टितार्धयोगेन भवेदर्धनिकुट्टितम् ॥ २०६ ॥

**॥ इत्यर्धनिकुट्टितम् ॥**

यत्र क्रमात् कटिश्छिन्ना शीर्षे बाहू च पल्लवौ ।
पौनःपुन्येन करणं कटिच्छिन्नं विदुर्बुधाः ॥ २०७ ॥

**॥ इति कटिच्छिन्नम् ॥**

हस्तोऽपविद्धः स्यात् सूच्या पादश्चैव निकुट्टितः ।
पार्श्वं तु सन्नतं यत्र तत्ख्यातमर्धरेचितम् ॥ २०८ ॥

**॥ इत्यर्धरेचितम् ॥**

स्वस्तिकौ यत्र पादौ तु हस्तौ वक्षसि रेचितौ ।
तथा निकुञ्चितं वक्षस्तद्वक्षःस्वस्तिकं मतम् ॥ २०९ ॥

**॥ इति वक्षःस्वस्तिकम् ॥**

[ रेचितौ यत्र हस्तौ तु चरणेनाञ्चितेन च ।
उन्मत्तं करणं **प्राज्ञै**स्तत्प्रोक्तं **नृत्तकोविदैः** ] ॥ २१० ॥

**॥ इत्युन्मत्तम् ॥**

यत्र हस्तौ च पादौ च स्यातां हि स्वस्तिकाकृती ।
करणं तत्स्वस्तिकं प्रोक्त**माचार्यैर्भरतादिभिः** ॥ **२११** ॥

**॥ इति स्वस्तिकम् ॥**

विक्षिप्ताक्षिप्तबाहुभ्यां पादौ च स्वस्तिकाकृती ।
अपक्रान्ताऽर्ध[ 50ª ]-सूचीभ्यां तत्पृष्ठस्वस्तिकं मतम् ॥ २१२ ॥

**॥ इति पृष्ठस्वस्तिकम् ॥**

206ª. BP. बाहुः After 206 P. इत्य......निकुट्टम् ॥
207ª. BP. कटिछ्छिन्ना 207ᶜ. B. पौनपुण्येन P. पौनःपुण्येन
208ª. B. हस्तौपविद्धः, BP. सूची 208ᵇ. B. पादाः
210. not found in B; supplied from P.
211ᶜᵈ. B. प्रोक्तमर्माचार्यैः After 212 BP. ॥ इति स्वस्तिकम् ॥

पार्श्वयोः पुरतश्चैव श्लिष्टश्चेत्स्वस्तिको भवेत् ।
हस्ताभ्यामथ पादाभ्यां [ तद् ]दिक्स्वस्तिकसंज्ञकम् ॥ २१३ ॥

## ॥ इति दिक्स्वस्तिकम् ॥

अलातं चरणं कृत्वा दक्षिणं न्यंसयेत्करम् ।
ऊर्ध्वजानुक्रमं कुर्यादलातकमिदं भवेत् ॥ २१४ ॥

## ॥ इत्यलातम् ॥

स्वस्तिकापसृतः पादो हस्तौ नाभिकटीस्थितौ ।
पार्श्वमुद्वाहितं यत्र करणं स्यात् कटीसमम् ॥ २१५ ॥

## ॥ इति कटीसमम् ॥

हृदि वामो भवेद्धस्तः सव्यश्चाक्षिप्तरेचितः ।
रेचितश्चापविद्धश्च ज्ञेयमाक्षिप्तरेचितम् ॥ २१६ ॥

## ॥ इत्याक्षिप्तरेचितम् ॥

करौ पादौ च विक्षिप्तौ तेषामाक्षेपणं पुनः ।
यत्र तत्करणं ख्यातं विक्षिप्ताक्षिप्तकं बुधैः ॥ २१७ ॥

## ॥ इति विक्षिप्ताक्षिप्तकम् ॥

विधाय स्वस्तिकौ पादौ करिहस्तं तु दक्षिणम् ।
वक्षःस्थले करं वाममर्धस्वस्तिकमादिशेत् ॥ २१८ ॥

## ॥ इत्यर्धस्वस्तिकम् ॥

व्यावृत्तपरिवृत्तस्तु करिहस्तः करो यदा ।
अञ्चितो नासिकाग्रे तु तदञ्चितमुदीरितम् ॥ २१९ ॥

## ॥ इत्यञ्चितम् ॥

---

213[d]. B. दिक्स्वस्तिसंज्ञकम् 214[a]. अलांतं, क्षत्वा 214[c]. P. उद्ध्वं
215[a]. B. पादौ 216[c]. रेचिताचाप-
After 217 BP. इति क्षिप्ता- 218[c]. B. वक्षस्थले
219[a]. P. व्यावृत्ता-

कुञ्चितं पादमुद्धृत्य त्र्यस्रमूरुं विवर्तयेत्।
कटिजानु विवर्ते स्याद्भुजङ्गत्रासितं हि तत् ॥ २२० ॥

॥ इति भुजङ्गत्रासितम् ॥

जानु स्तनसमं न्यस्येत्पादमुत्क्षिप्य कुञ्चितम्।
प्रयोगवशगौ हस्तावूर्ध्वजानु प्रकीर्तितम् ॥ २२१ ॥

[ 50b ] ॥ इत्यूर्ध्वजानु ॥

विधाय वृश्चिकं पादं हस्तं पार्श्वे निकुञ्चयेत्।
दक्षिणं नासिकाग्रे तु प्रख्यातं तन्निकुञ्चितम् ॥ २२२ ॥

॥ इति निकुञ्चितम् ॥

चरणाभ्यामुभाभ्यां तु घूर्णमानोपसर्पगैः।
उद्वेष्टितापविद्धैस्तु करैर्मत्तल्युदीरितम् ॥ २२३ ॥

॥ इति मत्तल्लि ॥

स्खलितापसृतौ पादौ करो वामश्च रेचितः।
सव्यपाणिः कटिस्थः स्यादर्धमत्तल्लि तन्मतम् ॥ २२४ ॥

॥ इत्यर्धमत्तल्लि ॥

रेचितः सव्यहस्तः स्यात् पादः सव्यो निकुट्टितः।
दोला चैव भवेद्वामस्तद्रेचकनिकुट्टिकम् ॥ २२५ ॥

॥ इति रेचकनिकुट्टिकम् ॥

करौ नाभितटे कार्यौ प्राङ्मुखौ खटकामुखौ।
सूचीविद्धावपक्रान्तौ पादौ पादापविद्धके ॥ २२६ ॥

॥ इति पादापविद्धकम् ॥

220b. B त्रस्रम् P. उरुम्  221b. BP. पादिम्, B. उक्षिप्य
223d. BP. मत्तलि. After 223 P. इति मत्तलि  224b. BP. करौ
224c. B. कटिःस्थ,  224d. P. मतल्लि
After 224. P. –मत्तलि.  225c. P. वाम
225d. B. रेचकमकुट्टनम्, P. तस्याद्रेचककुट्टनम्
After 225 B. ॥ इति रेचककुट्टनम् ॥
226d. B. पादावविभ– After 226. B. इति पादप–

सूचीपादो भवेद्यत्र करः स्यादपविद्धकः ।
त्रिकं तथा विवृत्तं च वलितं तु बुधैर्मतम् ॥ २२७ ॥

॥ इति वलितम् ॥

वर्तितो घूर्णितः सव्यो हस्तो, वामश्च दोलितः ।
स्वस्तिकापसृतः पादः करणं घूर्णितं मतम् ॥ २२८ ॥

॥ इति घूर्णितम् ॥

करिहस्तो भवेद्वामो सव्यश्चैव विवर्तितः ।
बहुशः कुट्टितः पादो बुधैस्तल्ललितं मतम् ॥ २२९ ॥

॥ इति ललितम् ॥

ऊर्ध्वं जानु तथा कृत्वा तस्योपरि न्यसेल्लताम् ।
करणं नृत्यतत्त्वज्ञैर्दण्डपक्षमुदाहृतम् ॥ २३० ॥

॥ इति दण्डपक्षम् ॥

भुजङ्गत्रासितं कृत्वा तथोभौ रेचितौ पुनः ।
करौ च वामपार्श्वस्थौ भुजङ्गत्रस्तरेचितम् ॥ २३१ ॥

[51[a]] ॥ इति भुजङ्गत्रस्तरेचितम् ॥

त्रिकं तु वलितं कृत्वा लतारेचितकौ करौ ।
कुर्वीत नूपुरं पादं करणे नूपुराभिधे ॥ २३२ ॥

॥ इति नूपुरम् ॥

रेचितं हस्तपादं च कटिग्रीवं च रेचितम् ।
वैशाखस्थानके स्थित्वा तत्स्याद्वैशाखरेचितम् ॥ २३३ ॥

॥ इति वैशाखरेचितम् ॥

आक्षिप्तः स्वस्तिकः पादः करावुद्वेष्टितौ तथा ।
त्रिकस्य वलनाच्चैव ज्ञेयं भ्रमरकं तु तत् ॥ २३४ ॥

॥ इति भ्रमरकम् ॥

---

227[a]. P. भवद्यत्र 229[a]. B. करहस्तः 230[a]. P. उर्ध्वंजानु
230[c]. P. तत्वज्ञैः 231[b]. B. रेच्चितो 231[c]. B. —पार्श्वस्थो
233[d]. P. वैशाष— 234[d]. B. ज्ञेये

चतुरो दक्षिणो यत्र वामः स्यादञ्चितः करः ।
सव्यस्तु कुट्टितः पादः [ चतुरं तत्प्रकीर्तितम् ॥ २३५ ॥

॥ इति चतुरम् ॥

भुजङ्गत्रासितः पादो दक्षिणो रेचितः करः ।
लताख्यश्च करो वामो]भुजङ्गाञ्चितके भवेत् ॥ २३६ ॥

॥ इति भुजङ्गाञ्चितम् ॥

विक्षिप्तं हस्तपादं च समन्ताद्यत्र दण्डवत् ।
रेच्यते, तद्धि करणं मतं दण्डकरेचितम् ॥ २३७ ॥

॥ इति दण्डकरेचितम् ॥

वृश्चिकं पादमाश्रित्य तावप्यथ निकुट्टितौ ।
विधातव्यौ करौ तत्तु ज्ञेयं वृश्चिककुट्टितम् ॥ २३८ ॥

॥ इति वृश्चिककुट्टितम् ॥

सूचीं कृत्वाऽपविद्धं च चरणं दक्षिणं क्षिपेत् ।
रेचिता तु कटिर्यत्र कटिभ्रान्तमुदाहृतम् ॥। २३९ ॥

॥ इति कटिभ्रान्तम् ॥

भवेत्पृष्ठेऽञ्चितः पादः कुञ्चितोर्ध्वतलाङ्गुलिः ।
वामो हस्तो लताख्यश्च लतावृश्चिकमाचरेत् ॥ २४० ॥

॥ इति लतावृश्चिकम् ॥

कटी स्यात्क्रमशश्छिन्ना नितम्बे चालपल्लवः ।
वैशाखस्थानकेनैव [ 51b ]तच्छिन्नं करणं मतम् ॥ २४१ ॥

॥ इति छिन्नम् ॥

---

235d and 236abc missing in B; supplied from Bharata.

235c. B. सत्यस्तु कुट्टनः पादो; P. सव्यस्तुःगा 236d. B. भुजंगाचितको भवेत् ।

237a. P. रच्यते 238a B. आश्रित्यम् 238c. B. विधातव्यैं, तत्रु

239a. B. सूची कृत्रा च 239b. BP. चरणां दक्षिणाम्

239d. B. कटीभ्रांतम् 241c. P. वैशाष- 241d. B. तच्छिन्नं...मत ॥

चरणं वृश्चिकं कृत्वा स्वस्तिकौ च करावुभौ ।
रेचितौ विप्रकीर्णौ च कार्यौ वृश्चिकरेचिते ॥ २४२ ॥

**॥ इति वृश्चिकरेचितम् ॥**

स्कन्धदेशाञ्चितौ पाणी पादः पृष्ठाञ्चितो यदा ।
दूरसन्नतपृष्ठं च तद्वृश्चिकमुदीरितम् ॥ २४३ ॥

**॥ इति वृश्चिकम् ॥**

स्थानकं स्याद्यदालीढं हस्तावुरसि रेचितौ ।
ऊर्ध्वाधो विप्रकीर्णौ च व्यंसितं नाम तद्भवेत् ॥ २४४ ॥

**॥ इति व्यंसितम् ॥**

पार्श्वे तु स्वस्तिकौ हस्तौ तथा पादो निकुट्टितः ।
यत्र तत्करणं प्रोक्तं तज्ज्ञैः पार्श्वनिकुट्टकम् ॥ २४५ ॥

**॥ इति पार्श्वनिकुट्टकम् ॥**

विधाय वृश्चिकं पादं चरणाङ्गुष्ठकेन तु ।
ललाटे तिलकं कुर्याल्ललाटतिलकं हि तत् ॥ २४६ ॥

**॥ इति ललाटतिलकम् ॥ ***

कुञ्चितं पृष्ठतः कृत्वा निष्क्रान्तं चरणं तथा ।
आक्षिप्तौ च करौ कृत्वा करणे क्रान्तसंज्ञके ॥ २४७ ॥

**॥ इति क्रान्तम् ॥**

दक्षिणस्तु नतः पादः करः सव्यस्तु कुञ्चितः ।
उत्तानो वामपार्श्वस्थस्तत्कुञ्चितमुदीरितम् ॥ २४८ ॥

**॥ इति कुञ्चितम् ॥**

242[d]. B. -रेचितो ॥ 243[b]. B. पृष्ठांचितौ 243[c]. B. दूरा- P. दूरसन्नं
244[c]. P. चिप्रकीर्णौ 245[b]. B. पादौ 245[d]. BP. तज्ज्ञैः
245[d]. B. -कुट्टिकम् P. कुट्ट-; after 245 B. -कुट्टिकम् P. -कुट्टकम्
*Folios 82-93 missing in P from here onwards.
247[b]. B. निःक्रांतम् 248[a]. B. नतः

प्रलम्बिताभ्यां बाहुभ्यां देहेनाऽवनतेन च ।
अपविद्धाङ्घ्रिणाऽप्येतदुच्यते चक्रमण्डलम् ॥ २४९ ॥

**॥ इति चक्रमण्डलम् ॥**

स्वस्तिकापसृतौ पादावपविद्धक्रमौ यदा ।
उरोमण्डलकौ हस्तावुरोमण्ड[ 52a ]-लकं मतम् ॥ २५० ॥

**॥ इत्युरोमण्डलम् ॥**

हस्तपादं यदाऽऽक्षिप्तं क्रियते यत्र वेगतः ।
आक्षिप्तकरणं नाम्ना समुद्दिष्टं मुनीश्वरैः ॥ २५१ ॥

**॥ इत्याक्षिप्तम् ॥**

ऊर्ध्वाङ्गुलितलः पादः पार्श्वेनोर्ध्वं प्रसारितः ।
यत्राञ्चिततलौ हस्तौ ज्ञेयं तलविलासितम् ॥ २५२ ॥

**॥ इति तलविलासितम् ॥**

प्रसृतः पृष्ठतः पादो द्वौ तालावर्धमेव च ।
यस्य चैवानुगो हस्तः पुरस्तादर्गलं मतम् ॥ २५३ ॥

**॥ इत्यर्गलम् ॥**

विक्षिप्तं हस्तपादं च पृष्ठतः पार्श्वतोऽपि वा ।
यत्रैकमार्गानुसृतं तद्विक्षिप्तमुदाहृतम् ॥ २५४ ॥

**॥ इति विक्षिप्तम् ॥**

प्रसार्य कुञ्चितं पादं द्रुतमावर्तयेत्पुरः ।
प्रयोगवशगौ हस्तौ तदावर्तमुदीरितम् ॥ २५५ ॥

**॥ इत्यावर्तम् ॥**

कुञ्चितं पादमुत्क्षिप्य पार्श्वात् पार्श्वं तु दोलयेत् ।
प्रयोगवशगौ हस्तौ दोलापादं जगुर्बुधाः ॥ २५६ ॥

**॥ इति दोलापादम् ॥**

---

249a. B. प्रलंभि- 249. B. -विद्धांह्नि 250cd. B. उरौ
251a. B. तदा 254c. B. मार्ग-; after 255 B. ॥ इत्यावर्त्तम् ॥

हस्तपादं यदाऽऽक्षिप्तं त्रिकं चापि विवर्तितम् ।
रेचितौ च तथा हस्तौ विवर्तकरणं तदा ॥ २५७ ॥

**॥ इति विवर्तम् ॥**

सूचीविद्धं विधायाऽऽदौ त्रिकं तु परिवर्तयेत् ।
हस्तौ च रेचितौ कार्यौ विनिवृत्तं मतं तदा ॥ २५८ ॥

**॥ इति विनिवृत्तम् ॥**

पार्श्वक्रान्तक्रमं कृत्वा पुरस्ताद्यत्र पातयेत् ।
प्रयोगवशगौ हस्तौ पार्श्वक्रान्तमुदीरितम् ॥ २५९ ॥

[ 52b ] **॥ इति पार्श्वक्रान्तम् ॥**

चरणः कुञ्चितः पृष्ठे समुन्नतमुरःस्थलम् ।
तिलकस्थानके हस्तौ निशुम्भितमुदाहृतम् ॥ २६० ॥

**॥ इति निशुम्भितम् ॥**

भ्रामितं पृष्ठतः पादं सर्वतोमण्डलत्वतः ।
भ्रामयेच्चेच्छिरोदेशे विद्युद्भ्रान्ताभिधं तदा ॥ २६१ ॥

**॥ इति विद्युद्भ्रान्तम् ॥**

अतिक्रान्तं क्रमं कृत्वा पुरो यत्र प्रसारयेत् ।
प्रयोगानुगतौ हस्तावतिक्रान्तमुदाहृतम् ॥ २६२ ॥

**॥ इत्यतिक्रान्तम् ॥**

हस्तपादं यदाऽऽक्षिप्तं विवर्तितमथ त्रिकम् ।
द्वितीयो रेचितो हस्तो विवर्तितमुदीरितम् ॥ २६३ ॥

**॥ इति विवर्तितम् ॥**

---

257b. B. चापं; after 258 B. ॥ इति निवृत्तम् ॥ 259c. B. -वशगो हस्तो
260b. B. उरस्थलम्; after 260. B. ॥ इति शुम्भितम् ॥
261c. चेच्छिरो- 261d. B. विद्युतभ्रां-
After 261. B. ॥ इति विद्युभ्रांतम् ॥ 263c. B. रेचितो द्वितीयो हस्तौ

करः कर्णाञ्चितो वामो दक्षिणश्च लताकरः ।
दोलापादस्तथा चैव गजक्रीडितकं भवेत् ॥ २६४ ॥

॥ इति गजक्रीडितम् ॥

पुरो निपातयेद्यस्मिन्नुत्क्षिप्य चरणं द्रुतम् ।
तलसंस्फोटितौ हस्तौ तलसंस्फोटितं तु तत् ॥ २६५ ॥

॥ इति तलसंस्फोटितम् ॥

पादः प्रसारितः पृष्ठे लतारेचितकौ करौ ।
शिरः समुन्नतं चैव गरुडप्लुतके भवेत् ॥ २६६ ॥

॥ इति गरुडप्लुतम् ॥

पादः सूची नतं पार्श्वमेको वक्षःस्थितः करः ।
द्वितीयश्च ततो गण्डे गण्डसूचि हि तन्मतम् ॥ २६७ ॥

॥ इति गण्डसूचि ॥

ऊर्ध्वाऽपवेष्टितौ हस्तौ पादः सूचीविवर्तितः ।
त्रिकं तु परिवृत्तं तु परिवृत्तमुदीरितम् ॥ २६८ ॥

[ 53[a] ] ॥ इति परिवृत्तम् ॥

एकः स्थितः समः पादः ऊरुपृष्ठे स्थितः परः ।
मुष्टिहस्तश्च वक्षःस्थः पार्श्वजानु मतं तु तत् ॥ २६९ ॥

॥ इति पार्श्वजानु ॥

पादः प्रसारितः पृष्ठे किञ्चिदञ्चितजानुकः ।
प्रसारितौ यदा बाहू तदा गृध्रावलीनकम् ॥ २७० ॥

॥ इति गृध्रावलीनम् ॥

265[d]. B. ताल–
268[a]. B. उद्ध्र्वापवेष्टितो 268[b]. B. पादसूची 268[c]. B. परिवर्त्तम्
269[b]. B. उरु– 269[c]. B. वक्षपार्श्व–
After 269 B. ॥ इति .. जानुः ॥ 270[c]. B. प्रसारिते
270[d]. B. गृध्रव–

उत्प्लुत्य चरणौ यत्र भवेच्च स्वस्तिकः परः ।
उभौ च सन्नतौ हस्तौ सन्नतं करणं मतम् ॥ २७१ ॥

[॥ इति सन्नतम् ॥]

उद्धृत्य कुञ्चितं पादं कुर्यादग्रगतं भुवि ।
सप्रयोगौ करौ स्यातां तत्सूचि परिकीर्तितम् ॥ २७२ ॥

॥ इति सूचि ॥

शिरोदेशेऽपसव्याङ्घ्रिः सूचीपादस्तु दक्षिणः ।
यत्र तत्करणं प्रोक्तमर्धसूचीति सूरिभिः ॥ २७३ ॥

॥ इत्यर्धसूचि ॥

पादसूच्या यदा पादो द्वितीयो वध्यते तथा ।
करौ च कटिदेशस्थौ सूचीविद्धाभिधं मतम् ॥ २७४ ॥

॥ इति सूचीविद्धम् ॥

कृत्वोरुवलितं पादमपक्रान्तक्रमं न्यसेत् ।
सप्रयोगौ करौ यत्र तदपक्रान्तमुच्यते ॥ २७५ ॥

॥ इत्यपक्रान्तम् ॥

विधाय वृश्चिकं पादं भवेतां रेचितौ करौ ।
विवर्तितं त्रिकं यत्र मयूरललितं हि तत् ॥ २७६ ॥

॥ इति मयूरललितम् ॥

अञ्चिताऽपसृतौ पादौ शिरश्च परिवाहितम् ॥
रेच्यते रेचितौ हस्तौ सर्पितं नाम तन्मतम् ॥ २७७ ॥

॥ इति सर्पितम् ॥

चरणं नूपुरं कृत्वा दण्डपादं प्रसारयेत् ।
[53b] क्षिप्राविद्धकरं चैव दण्डपादं प्रकीर्तितम् ॥ २७८ ॥

॥ इति दण्डपादम् ॥

---

276b. B. रचितौ

क्रमं कृत्वा ह्यतिक्रान्तमुत्प्लुत्य परिपातयेत् ।
क्षिप्तोर्ध्वमञ्चिता जङ्घा तद् विद्याद्धरिणप्लुतम् ॥ २७९ ॥

**॥ इति हरिणप्लुतम् ॥**

दोलापादं विधायाऽऽदौ समुत्प्लुत्य निपातयेत् ।
त्रिकं विवर्तितं यत्र तत्प्रेङ्खोलितमुच्यते ॥ २८० ॥

**॥ इति प्रेङ्खोलितम् ॥**

बाहू चोर्ध्वविनिष्क्रान्तौ करौ चाभिमुखाङ्गुली ।
चारी बद्धाभिधा यत्र नितम्बं करणं जगुः ॥ २८१ ॥

**॥ इति नितम्बम् ॥**

दोलापादं क्रमं कृत्वा करौ तदनुगावुभौ ।
रेचितौ घूर्णितौ कार्यौ करणे स्खलिताभिधे ॥ २८२ ॥

**॥ इति स्खलितम् ॥**

वामो वक्षःस्थितो हस्तो ह्युद्वेष्टिततलोऽपरः ।
अञ्चितश्चरणश्चैव क्रियते करिहस्तके ॥ २८३ ॥

**॥ इति करिहस्तम् ॥**

स्यादेको रेचितो हस्तो लताख्यश्च परस्तथा ।
प्रसर्पिततलौ पादौ तत्प्रसर्पितमुच्यते ॥ २८४ ॥

**॥ इति प्रसर्पितम् ॥**

कृत्वाऽलातं पुरश्चैकमपरं च द्रुतक्रमम् ।
करौ च पादानुगतौ सिंहविक्रीडिते मतौ ॥ २८५ ॥

**॥ इति सिंहविक्रीडितम् ॥**

पादः प्रसर्पितः पृष्ठे तथा पाणी निकुञ्चितौ ।
पुनस्तथैव कर्तव्यं करणे सिंहकर्षिते ॥ २८६ ॥

**॥ इति सिंहकर्षितम् ॥**

---

279[c]. B. क्षिप्तौदूर्ध्वं 279[cd]. B. जंघाविद्यात् 281[a]. B. निःक्रांतौ
283[a]. B. हस्तौ 284[a]. B. हस्तौ 285[a] B. कृत्वालात 286[d]. B. करणें

आक्षिप्तहस्तमाक्षिप्तपादमाक्षिप्तदेहकम् ।
उद्वृत्तं च तथा गात्र[ 54a ]-मुद्वृत्ताख्यं प्रपञ्चितम् ॥ २८७ ॥

॥ इत्युद्वृत्तम् ॥

पादश्चाक्षिप्तकः कार्यः करस्तस्यैव चानुगः ।
आनम्रं च तथा गात्रं तन्नाम्नोपसृतं मतम् ॥ २८८ ॥

॥ इत्युपसृतम् ॥

दोलापादं क्रमं कृत्वा तलसङ्घट्टितौ करौ ।
हस्तं च रेचयेद्वामं तलसङ्घट्टिताभिधे ॥ २८९ ॥

॥ इति तलसङ्घट्टितम् ॥

एको वक्षःस्थितो हस्तो द्वितीयश्च प्रलम्बितः ।
तलाग्रसंस्थितः पादः करणे जनिताभिधे ॥ २९० ॥

॥ इति जनितम् ॥

विधाय जनितं पादं करौ चाभिमुखाङ्गुली ।
निपातितौ शनैर्यत्र प्रोक्तं तदवहित्थकम् ॥ २९१ ॥

॥ इत्यवहित्थम् ॥

वक्षःस्थितौ करौ कार्यावुरो निर्भुग्नमेव च ।
स्थानकं मण्डलं यत्र निवेशं करणं मतम् ॥ २९२ ॥

॥ इति निवेशम् ॥

उत्प्लुत्य पतनं यत्र तलसञ्चरपादयोः ।
वलितं सन्नतं गात्रमेलिकाक्रीडितं भवेत् ॥ २९३ ॥

॥ इत्येलिकाक्रीडितम् ॥

आवृत्तकरणः पाणिरूरुपृष्ठेऽञ्चितो यदा ।
जङ्घाऽञ्चिता तथोद्वृत्ता तदूरूद्वृत्तमीरितम् ॥ २९४ ॥

॥ इत्यूरूद्वृत्तम् ॥

---

288^b. B. तस्येत    289^c. B. रंचयेत्    290^a. B. स्थितौ हस्तौ
291^d. B. अवदित्थ-    292^c. B. स्थानक-    293^a. B. तत्प्लुत्य पाननम्-
294^a. B. आवृत्तः    294^b. B. उरु-    294^c. B. जंघांचितो तथे-
294^d. उरू    After 294. B. ॥ इत्युरू-

परिवाहितं यत् शीर्षं लम्बितौ च तथा करौ ।
चरणौ वलिताविद्धौ मदस्खलितमेव तत् ॥ २९५ ॥

॥ इति मदस्खलितम् ॥

अग्रे प्रसर्पितः पादः कुञ्चितो गगनोन्मुखः ।
हस्तौ च रेचितौ यत्र विष्णुक्रान्तं प्रकीर्तितम् ॥ २९६ ॥

॥ इति विष्णुक्रान्तम् ॥

आवर्तितं [54b] करं कृत्वा ह्यूरुपृष्ठे निकुञ्चयेत् ।
ऊरुश्चैव तथाऽऽविद्धः सम्भ्रान्तं करणं मतम् ॥ २९७ ॥

॥ इति सम्भ्रान्तम् ॥

अपविद्धः करः सूच्या चरणश्च निकुट्टितः ।
वक्षःस्थश्च करो वामो विष्कम्भे करणे भवेत् ॥ २९८ ॥

॥ इति विष्कम्भम् ॥

कार्यावुद्धट्टितौ पादौ तलसङ्घट्टितौ करौ ।
पार्श्वं नतं प्रकर्तव्यं बुधैरुद्धट्टिताभिधे ॥ २९९ ॥

॥ इत्युद्धट्टितम् ॥

अलातकं विधायाऽऽदौ करौ द्वावपि रेचयेत् ।
कुञ्चितावञ्चितौ चैतौ वृषभक्रीडिते मतौ ॥ ३०० ॥

॥ इति वृषभक्रीडितम् ॥

रेचितावञ्चितौ पाणी लोलितं वर्तितं शिरः ।
पार्श्वयोरुभयोर्यत्र तल्लोलितमुदाहृतम् ॥ ३०१ ॥

॥ इति लोलितम् ॥

---

295[a]. B. परिवाहित — 296[a]. B. पाद — 296[b]. B. कुंचितौ
297[a]. B. आवर्ति- — 297[c]. B. उरुः — 297[d]. B. संभ्रांतः
298[a]. B सूची — 299[a]. B. उद्घटितौ
299[d]. B. उद्घटिता — After 299. B. ॥ इत्युद्घटितम् ॥
300[c]. B. चेतौ — 301[a]. B. कुंचिता- — 301[d]. B. तल्लोलितम्

स्वस्तिकाऽपसृतौ पादौ शीर्षकं परिवाहितम् ।
हस्तौ च रेचितौ यत्र ज्ञेयं नागापसर्पितम् ॥ ३०२ ॥

## ॥ इति नागापसर्पितम् ॥

निषण्णगात्रश्चरणं विधाय तल्सञ्चरम् ।
उद्वाहितं तथा वक्षः शकटास्यं प्रकीर्तितम् ॥ ३०३ ॥

## ॥ इति शकटास्यम् ॥

ऊर्ध्वाङ्गुलितलः पादस्त्रिपताकावधोमुखौ ।
हस्तौ च सन्नतं शीर्षं गङ्गावतरणं त्विति ॥ ३०४ ॥

## ॥ इति गङ्गावतरणम् ॥

अष्टोत्तरशतं प्रोक्तं करणानां यथास्फुटम् ॥ ३०५ ॥

## ॥ इति करणानि ॥

सर्वेषामङ्गहाराणां निष्पूर्तिः करणैर्भवेत् ।
एभिरेवाङ्गहारास्ते कल्पनीया यथाक्रमम् ॥ ३०६ ॥
अ[55a]-थ चारीः प्रवक्ष्यामि तत्र भौम्यस्तु षोडश ।
आकाशक्योऽपि तावत्यस्तल्लक्ष्यमभिदध्महे ॥ ३०७ ॥
पादौ समनखौ श्लिष्टौ समपादोदिता तदा ॥ ३०८ ॥

## ॥ इति समपादा ॥

स्थितावर्ता तदा चारी पादोऽग्रतल्सञ्चरः ।
चरणान्तरपार्श्वे चेद्गत्वा स्वस्तिकतां गतः ॥
तथेतरोऽपि विश्लिष्य संनीतः पार्श्वकं स्वकम् ॥ ३०९ ॥

## ॥ इति स्थितावर्ता ॥

303a. B. निषण-
304a. B. ऊर्द्धा-
305b. B. करं नाम
306b. B. निष्कृतिः
307a. B. आचारीप्रव-
307b. B. भौम्यस्तु, षोडशः
307c. B. लावत्य-
307d. E. अपिदध्महे

निषण्णाङ्गस्तु चरणं प्रसार्य तलसञ्चरम् ।
उद्वाहितमुरः कृत्वा शकटास्या प्रयोजिता ॥ ३१० ॥

॥ इति शकटास्या ॥

विश्लिष्य समपादायाः पादौ यत्र तलाग्रतः ।
कुर्वाते धरणीघातमुदिता विच्यवा तु सा ॥ ३११ ॥

॥ इति विच्यवा ॥

सव्यस्य पृष्ठतो वामो यदा पादो भवेत्ततः ।
तस्यापसर्पणं यत्र बुधैः साऽध्यर्धिका मता ॥ ३१२ ॥

॥ इत्यध्यर्धिका ॥

सव्यः प्रसारितः पादः पुनश्चैवापसर्पितः ।
वामः सव्यापसर्पी च यत्र चाषगतिर्मता ॥ ३१३ ॥

॥ इति चाषगतिः ॥

तलसञ्चारपादाभ्यामुत्प्लुत्य पातनं तु यत् ।
क्रमेण क्रियते यत्र ह्येलिकाक्रीडिता तु सा ॥ ३१४ ॥

॥ इत्येलिकाक्रीडिता ॥

जङ्घाद्वयस्य वलनं मिथः स्वस्तिकतां गतम् ।
चलनादूरुयुग्मस्य चारी बद्धेति शब्दिता ॥ ३१५ ॥

॥ इति बद्धा ॥

तलसञ्चरपादस्य पार्ष्णिर्बाह्योन्मुखी तदा ।
जङ्घो[ 55b ]-द्वृत्ताञ्चिता यत्र ह्यूरूद्वृत्तेति सा मता ॥ ३१६ ॥

॥ इत्यूरूद्वृत्ता ॥

---

310[a]. B. निषणांगः
311[d]. विचवा, after 311 B ॥ इति विस्यवा ॥
312[d]. B. मवा
After 312. B. ॥ इत्यर्द्धिका ॥
314[ab]. B. पादाभ्यां मुत्प्लुत्य
314[d]. B. ह्यलिका, क्रीडितातु
After 314. B. ॥ इत्ये......क्रीडित ॥
316[d]. B. ह्यूरु-
316[b]. B. पार्ष्णी
After 316. B. इत्यूद्वृत्ता

पादोऽग्रतलसञ्चारी ह्यग्रतो वापि पृष्ठतः ।
निघृष्टो द्वितीयः पादः क्रमात्सा चाङ्किता मता ॥ ३१७ ॥

॥ **इत्यङ्किता** ॥

निषण्णोरुः समो वामः सव्यः पादः प्रसारितः ।
पञ्चतालान्तरे तिर्यक् यत्र स्यात् स्यन्दिता मता ॥ ३१८ ॥

॥ **इति स्यन्दिता** ॥

पादचारविपर्यासात्सैवाऽपस्यन्दिता मता ॥ ३१९ ॥

॥ **इत्यपस्यन्दिता** ॥

वक्षःस्थो मुष्टिहस्तश्च परो हस्तः प्रवर्तितः ।
पादोऽग्रतलसञ्चारी सा चैव जनिता मता ॥ ३२० ॥

॥ **इति जनिता** ॥

तलसञ्चरपादाभ्यां घूर्णमानोपसर्पणैः ।
समोत्सरितमत्तल्ली **मुनिभिः** समुदाहृता ॥ ३२१ ॥

॥ **इति समोत्सरितमत्तल्ली** ॥

उभाभ्यां चरणाभ्यां च घूर्णमानोपमर्पणैः ।
उद्वेष्टितापविद्धैश्च हस्तैर्मत्तल्ल्युदीरिता ॥ ३२२ ॥

॥ **इति मत्तल्ली** ॥

पादः शनैर्निवर्तेत बाह्येनाभ्यन्तरेण च ।
यद्रेचकानुसारेण सा स्मृतोत्स्यन्दिता **बुधैः** ॥ ३२३ ॥

॥ **इत्युत्स्यन्दिता** ॥

॥ **इति भूमिचार्यः** ॥

---

317[d]. B. चेङ्किताः  After 317 B. ॥ इत्युङ्किता ॥
318[a]. B. निषणोरुः  320[b]. B. यरो  320[c]. B. पादौ
321[b]; 322[b]. B. -मानापसर्प्पणैः  322[d]. B. मत्तल्यु-

पादं कुञ्चितमुत्क्षिप्य पुरतश्च प्रसारयेत् ।
उत्क्षिप्तं पातयेच्चैनमतिक्रान्ता मता बुधैः ॥ ३२४ ॥

॥ इत्यतिक्रान्ता ॥

[ ऊरुभ्यां वलनं कृत्वा कुञ्चितं पादमुद्धरेत् ।
पार्श्वे विनिक्षिपेच्चैनमपक्रान्ता तु सा स्मृता ॥ ३२५ ॥

॥ इत्यपक्रान्ता ॥

कुञ्चितं पादमुत्क्षिप्य जानु स्तनसमं न्यसेत् ।
उद्धट्टितेन पादेन पार्श्वक्रान्ता विधीयते ॥ ३२६ ॥ ]

॥ इति पार्श्वक्रान्ता ॥

उत्क्षिप्य कुञ्चितं पादं जानु स्तनसमं नयेत् ।
द्वितीयः स्तब्धतां नीतः सोर्ध्वजानुः प्रकीर्तिता ॥ ३२७ ॥

॥ इत्यूर्ध्वजानुः ॥

कुञ्चितं पादमुद्धृत्य जानु चो[56a]-र्ध्वं प्रसारितम् ।
पातयेत्पुरतो यत्र सूची सा सूरिभिर्मता ॥ ३२८ ॥

॥ इति सूची ॥

विधाय कुञ्चितं पृष्ठे पादमग्रतलेन तु ।
क्षिप्रं निपातयेद् भूमौ सोक्ता नूपुरपादिका ३२९ ॥

॥ इति नूपुरपादिका ॥

उद्धृत्य कुञ्चितं पादं पार्श्वात् पार्श्वं तु दोलयेत् ।
पातयेदञ्चितं चैव दोलापादा तु सा मता ॥ ३३० ॥

॥ इति दोलापादा ॥

324a, 326a. B. उक्षिप्य    324c. B. उत्क्षिप्तः
After 324. B. ॥ इत्य...ताः ॥
325–26. missing in B; supplied from Bharata
328b. B. जानुनोर्न्वम्    329b. B. –तलेमनु    329c. B. निपातितो
330a, 331a. B. पाद    330b. B. पार्श्वात् missing.
330c B. पादयेत्......चैदो–

पादं कुञ्चितमुत्क्षिप्य ह्याक्षिप्य त्वञ्चितं क्षिपेत् ।
जङ्घास्वस्तिकसंयुक्तमाक्षिप्ता सा स्मृता **बुधैः** ॥ ३३१ ॥

**॥ इत्याक्षिप्ता ॥**

चरणः स्वस्तिकस्याग्रे कुञ्चितस्तु प्रसारितः ।
निपतेदञ्चिताविद्धं ह्याविद्धोक्ता **विदांवरैः** ॥ ३३२ ॥

**॥ इत्याविद्धा ॥**

आवेष्ट्य पादमाविद्धं समुत्प्लुत्य च पातयेत् ।
द्वितीयं परिवृत्योक्ता सोद्‌वृत्ता **मुनिभिः** स्फुटम् ॥ ३३३ ॥

**॥ इत्युद्‌वृत्ता ॥**

पादं तु वलितं पृष्ठे शिरोघृष्टं प्रसारयेत् ।
सर्वतोमण्डलाविद्धं विद्युद्भ्रान्ता प्रकीर्तिता ॥ ३३४ ॥

**॥ इति विद्युद्भ्रान्ता ॥**

पादः प्रसारितः पृष्ठे वलितोऽभ्यन्तरीकृतः ।
पार्ष्णिः प्रपतितश्चैव ह्यलाता सम्प्रकीर्तिता ॥ ३३५ ॥

**॥ इत्यलाता ॥**

कुञ्चितं पादमुद्‌धृत्य त्र्यस्रमूरुं विवर्तयेत् ।
कटीजानु विवर्तेत भुजङ्गत्रासिता मता ॥ ३३६ ॥

**॥ इति भुजङ्गत्रासिता ॥**

विधायादावतिक्रान्तं क्रममुत्प्लुत्य पातयेत् ।
जङ्घाञ्चिता परिक्षिप्ता सा चारी हरि[56b]-णप्लुता ॥ ३३७ ॥

**॥ इति हरिणप्लुता ॥**

---

331b. B. त्वंचित.
332a. B. स्वरितकः
332c. B. नियतेत्, आविद्धा
333a. B. आविद्ध
333c. B. द्वितीय-
334a. B. वलतम्
336d. B. -त्रीसिता
337c. B. -चितोपरि

विधाय नूपुरं पादं पुरोदेशे प्रसारयेत् ।
क्षिप्रमाविद्धकरणं दण्डपादोदिता तु सा ॥ ३३८ ॥

**॥ इति दण्डपादा ॥**

अतिक्रान्तं क्रमं कृत्वा त्रिकं तु परिवर्तयेत् ।
भ्रमणादन्यपादस्य सा चारी भ्रमरीरिता ॥ ३३९ ॥

**॥ इति भ्रमरी ॥**

**॥ इत्याकाशिक्यश्चार्यः ॥**

चारीसंयोगजातानि मण्डलानि बहून्यपि ।
विचार्य मतिमान् कुर्याद्यथेष्टं **नाट्यकोविदैः** ॥ ३४० ॥

श्रीमच्छ्रीपतिपादाब्जद्वन्द्वं नत्वा मुहुर्मुहुः ।
स्थानकान्युक्तवान् धीमान् **श्रीकण्ठः** कतिचित्स्फुटम् ॥ ३४१

पादयोरन्तरं यत्र द्वौ तालौ ताल-मानतः ।
तयोः स्थितः समश्चैकस्त्र्यस्रः पक्षस्थितः परः ॥ ३४२ ॥

किञ्चिदञ्चितजङ्घं च सौष्ठवाङ्गविभूषितम् ।
वैष्णवं स्थानमित्युक्तं विष्णुरत्राऽधिदेवता ॥ ३४३ ॥

**॥ इति वैष्णवम् ॥**

एकतालान्तरौ पादौ समौ यत्रैव संस्थितौ ।
समपादं समुद्दिष्टं विरञ्चिश्चात्र दैवतम् ॥ ३४४ ॥

**॥ इति समपादम् ॥**

तालास्त्रयोऽर्धतालश्च पादयोरन्तरं यदि ।
नभस्यूरू चरणयोस्तावदेवान्तरं भुवि ॥
त्र्यस्रपक्षस्थयोः स्थानं वैशाखमुदितं **बुधैः** ॥ ३४५ ॥

**॥ इति वैशाखम् ॥**

338[b]. B. पुरादेशे
338[c]. B. क्षिप्तमविद्ध-
338[d]. B. तुमा
340[b]. B. बहुन्यपि
340[c]. B. विर्चार्य
341[d]. B.श्रीकंतिचित्

चतुस्तालान्तरौ पादौ त्र्यस्रौ पक्षस्थितौ तथा ।
कटी जानुसमा प्रोक्ता मण्डले [ 57a ]चेन्द्रदैवते ॥ ३४६ ॥

॥ इति मण्डलम् ॥

मण्डलस्य तु सव्याऽङ्घ्रिः पञ्चतालप्रसारितः ।
आलीढं तद्भवेत् प्रत्यालीढमङ्घ्रिविपर्यये ॥ ३४७ ॥

॥ इत्यालीढप्रत्यालीढे ॥

एकपादान्तरो वामस्त्र्यस्रोऽङ्घ्रिर्द [-क्षिणः समः] ।
[नितम्ब-]स्थौ लताहस्तौ तथा स्यात्कठिरुन्नता ॥ ३४८ ॥
वक्षः समुन्नतं यत्र प्रसन्नं [वदनं तथा] ।
[यत्राऽऽयतं तदाऽऽख्यातं कमला चात्र देवता] ॥ ३४९ ॥

॥ इत्यायतम् ॥

[अवहित्थं तदेव स्याद् विपर्यासेन पादयोः ॥ ३५० ॥

॥ इत्यवहित्थम् ॥

समस्यैकस्य पादस्य पार्ष्णिदेशगतोऽपरः ।
सूचीपादः स्वपार्श्वे वा समस्तालान्तरे स्थितः ॥
यत्राऽश्वारोहणारम्भे तदश्वक्रान्तमुच्यते ॥ ३५१ ॥]

॥ इत्यश्वक्रान्तम् ॥

॥ इति स्थानानि ॥

करणान्यङ्गहाराश्च चार्यश्च मण्डलान्यपि ।
इत्यादीनां परे भेदा भूयो ह्यपि भवन्ति हि ॥ ३५२ ॥

---

346b. B. त्र्यस्त्रौ 346d. चंद्रदेवते 347a. B. सव्यांघ्रि
348-349. most of the missing words in B are reconstructed.
348c. B. -बेरथौ 349b. B. प्रसन्न- After 349 B इति स्थानानि ॥
350-351 seem to be missing in B; supplied from the Ratnākara
352a. B. करणेन्यंग 352d. B. भूयोऽपि

करणानां समुद्दिष्टं बुधैरष्टोत्तरं शतम् ।
उत्प्लुत्याद्यकरणानां षड्त्रिंशन्मुनिभिर्मता ॥ ३५३ ॥

अङ्गहारास्तथा प्रोक्ता द्वात्रिंशन्नाट्यवेदिभिः ।
षडशीतिस्तथा चार्यश्चत्वारो रेचका मताः ॥ ३५४ ॥

स्थानानामेकपंचाशन्मण्डलानि तु विंशतिः ।
लास्याङ्गानि दशैव स्युश्चतस्रो वृत्तयो मताः ॥
करणादिषु क्रमान्नूनं मया सङ्ख्या प्रकीर्तिता ॥ ३५५ ॥

गतिः सधैर्या प्रचुरोत्तमानां मध्या गतिर्मध्यमसत्त्वभाजाम् ।
द्रुता गतिश्चाधिकतोऽधमानां लयत्रयं सत्त्ववशेन योज्यम् ॥ ३५६ ॥

इति श्रीमन्नाट्य[-शास्त्रे]श्रीकण्ठकविविरचितायां रसकौमुद्यां पूर्वखण्डे नृत्याध्यायः पञ्चमः ॥ ५ ॥

353.ᶜ. B उत्प्लुताद्य    353ᵈ. B. षड्विंशन्
355ᶠ. B. प्रकीर्त्तित    356ᵇ. B. सत्व
colophon:– B. नाट्ये; पुर्वखंडे

# ॥ षष्ठोऽध्यायः ॥

लक्ष्मीबाहुलताञ्चितो विवसनामालोक्य गोपीं हसन्
कुर्वन् [ 57b ]दीनजने दयां मधुरिपुः क्रूरो नृसिंहाकृतिः ।
भीतो गोरसचौर्यतः क्षितितलं क्षत्राऽसृजा स्नापयन्
कुब्जारूपकरः प्रशान्तवदनः पायात् स वः केशवः ॥ १ ॥

सङ्गीतशास्त्रं किल पूर्वखण्डे विधाय साहित्यमथोत्तरेण ।
विरच्यते भूरिगुणैकधाम तदङ्गभूतं हि **गुरूपदिष्टम्** ॥ २ ॥

नाट्यं येन विलोकितं न हि नटीसौभाग्यसम्भावितं
तन्त्रीरागविनोदनादमधुरं गीतं न वाऽऽकर्णितम् ।
विज्ञातो न हि सत्कवीन्द्रकवितापीयूषधारारसः
पुंसा तेन महात्मना सह पशोः कश्चिद्विशेषो न हि ॥ ३ ॥

नानारत्नविचित्रदन्तिदशनप्रारब्धसिंहासने
सौरभ्याऽतिशयप्रफुल्लकुसुमामोदाढ्यसौधान्तरे ।
स्थित्वा पश्यति सादरं सह बुधैः साहित्यसारं ध्रुवं
धन्यः स क्षितिपः क्षितावपि भवेच्चातुर्यदीक्षागुरुः ॥ ४ ॥

**श्रीमन्मङ्गलपुत्रेण** षष्ठोऽध्यायस्तथोत्तरे ।
प्रशंसायाः पदं प्रोक्तं **विष्णुभक्तेन धीमता** ॥ ५ ॥

**इति श्रीमन्नाट्यशास्त्रे श्रीकण्ठकविविरचितायां रसकौमुद्यामुत्तरखण्डे प्रशंसाध्यायः [ षष्ठः ] ॥६॥**

---

1b. B. कुलीनजने, क्रूरौ
2b. B. उत्तरेयः
4a. B. -संहासने
4d. B. सः क्षितिपः
1c. B. गेरस-, सृजा स्नाययन्
3c. B. कविंद्र-
4b. B. कुसुमास्तामाढ्य
5c. B. प्रसंसाया

# ॥ सप्तमोऽध्यायः ॥

वर्ण्यंते सप्तमेऽध्याये रससन्दोहलक्षणम् ।
तेऽपि सर्वे स्वयं यस्मान्नाट्यसौभाग्यदीपकाः ॥ १ ॥

**त[58ᵃ]त्र रसस्वरूपमाह**

उद्याने प्रेयसीभिर्मलयजपवनैः कोकिलाद्यैर्विभावै-
र्ग्रीवाभ्रूवल्लिनेत्राम्बुजभुजलतिकाऽऽन्दोलनाद्याऽनुभावैः ।
व्यक्तीभूतो विवृद्धः सुचिरमुपचितो भूरिनिर्वेदनाद्यै-
र्नाट्ये गीते च काव्ये त्रिपु वसति रसः शुद्धबुद्धस्वभावः ॥ २ ॥

उत्पादितो यौवनरम्यरामाऽऽरामादिभिस्तैर्बहुभिर्विभावैः ।
संवर्धितो भ्रूलतिकाविभङ्गैर्भङ्गैरपाङ्गस्य करक्रियाभिः ॥ ३ ॥

निर्वेदमुख्यैः सहकारिभिस्तैः संवर्धितः पल्लवितः क्रमेण ।
रामादिरूपे पटुनर्तकेऽपि प्रतीयमानो रसशब्दवाच्यः ॥ ४ ॥

भागेन भुज्यत इति प्रवदन्ति केचित् सामाजिकप्रकरसादरचर्व्यमाणः ।
कार्यो न कारणकलापविभावनाशे यस्मान्न तिष्ठति रसो रसनीयरूपी ॥ ५ ॥

वेद्यान्तरस्पर्शविहीनचेतसां सामाजिकानां किल वासनात्मकः ।
एकोऽप्यनेकैरनुभूयते रसो न स्यात्ततो लौकिकभोगसन्निभः ॥ ६ ॥

**तद्विशेषानाह**

शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताख्या नव नाट्ये रसाः स्मृताः ॥ ७ ॥

**तत्र शृङ्गारः**

शृङ्गारो द्विविधः प्रोक्तः सम्भोगो विप्रलम्भकः ।
आद्यस्तत्रापरिच्छेद्यो गाढा[58ᵇ]-लिङ्गनचुम्बनैः ॥ ८ ॥

| | | |
|---|---|---|
| 1ᵇ. B. रसम् | 1ᶜᵈ. B. यस्मानाट्य- | 2ᵃ. B. मलयजय- |
| 2ᶜ. B. विवर्द्धः | 2ᵈ. B. गीतेय | 5ᵇ. B. सामजिक, चर्व्यमानः |
| 5ᵈ. B. रसौ | 6ᶜ. B. अनेकैः | 8ᶜ. B. अपरिछेद्या |

पुष्पावचयनज्योत्स्नासेवासलिलकेलिभिः ।
परिलोकनपानाद्यैरित्येकः परिगण्यते ॥ ९ ॥

द्वितीयस्त्वभिलाषेर्ष्याप्रवासशापहेतुकः ।
विरहानलसम्भूतस्ततः पञ्चविधः स्मृतः ॥ १० ॥

## तत्र सम्भोगः

उत्तुङ्गस्तनमर्दनैरतितरां बिम्बाधरे निर्भरं
दन्ताघातपरम्पराभिरभितस्ताद्दृङ्नखोल्लेखनैः ।
नीलेन्दीवरकान्तिनिन्दकदृशः प्रीतिः परं जायते
प्रोद्दामोन्मदयौवनस्य महिमा तत्रैव हेतुर्भवेत् ॥ ११ ॥

ग्रीष्मे सम्प्रति तन्वि कञ्चुलिकया क्लेशः परं जायते
धारायन्त्रगृहेऽपि गल्लयुगले घर्माम्भसां जालकम् ।
इत्थं प्रोच्य ददौ करं प्रियतमस्तद्वीटिकायां ततः
स्मेरायाः सचमत्कृति व्यवसितं भाग्येन तद्भुज्यते ॥ १२ ॥

## विप्रलम्भस्य पञ्चभेदान् क्रमेणाह

कृत्वा दीर्घप्रवासं युवतिपतिरभूदागतः स्वीयगेहे
वृन्दैर्व्याप्ते गुरूणां न हि मदनरणं कर्तुमीशो दिनांतः ।
गच्छ त्वं सप्तसप्ते चरमगिरिशिरस्तुभ्यमर्घ्यं प्रदास्ये
लम्बोऽयं नाशमाशु व्रजतु च दिवसः शीघ्रमायातु रात्रिः ॥ १३

दृष्ट्वा प्रातः सपत्न्या नयनसरसिजं छिन्नभिन्नाञ्जनाढ्यं
निद्राभङ्गात्प्रफुल्लं विलुलितकबरीभारमङ्घ्र्य[59a]-स्थिरत्वम् ।
दन्तक्षुण्णं च बिम्बाधरमपि पुरतः पौरनारीजनानां
प्रौढा गाढं नवोढां ग्लपयति परुषैर्वक्रवाचां प्रचारैः ॥ १४ ॥

10a. B. तुभिलाषे–, प्रवासः
12a. B. शंप्रति 12b. धर्म्माम्भसाम् 12c. B. तद्वाटिकायाम्
After 12 B पञ्चभेदात् 13d. B. लाशमाशु
14a. B. मातः, सरजिजम् 14b. B. अंघ्रोस्थिरत्वम्
14c. B. दन्तक्षुणं

नानाभोगं विलासं रतिमपि कुरुते प्रौढया सार्धमेव
भ्रान्त्या भर्ता नवोढां प्रति न हि तनुते दृष्टिपातप्रचारम् ।
जानीते हावभावं न किमपि न सखीशिक्षिता पूर्वमेषा
रोदित्येवाश्रुपातैः स्तनतटगलितैश्चारुहारानुकारैः ॥ १५ ॥

प्राणेशः सखि ! दूरदेशगमनं चक्रे गुरूणां वशः
कालोऽयं समुपागतो जलधरध्वानैर्महादुर्धरः ।
अद्याऽऽकर्ण्य मया निशीथसमये* कोलाहलं केकिनां
कृत्वा वृत्तिविवर्तनं शिव शिव प्राप्ता न निद्रा मनाक् ॥ १६ ॥

मार्गे हन्त शकुन्तला स्थितवती स्नातुं प्रवाहोदके
तत्रैवाङ्गुलितः श्लथा विगलिता मुद्रा नृपेणाऽर्पिता ।
राज्ञा वीक्ष्य न मुद्रिकां तदखिलं शापादहो विस्मृतं
नास्यास्तातगृहं न वा पतिगृहं मध्ये स्थिता दुःखिता ॥ १७ ॥

दृष्ट्वापि भ्रमरावलीढकुसुमां कादम्बशाखाशिखां
कान्ते कार्यवशाद् विदेशगमनं कर्तुं प्रवृत्ते सति ।
तन्व्या कङ्कणशून्यपाणियुगलेनाऽऽनीय गुर्वाज्ञया
माङ्गल्यः कलशो विलोचनपयःपूर्णः पुरः स्थापितः ॥ १८ ॥

## हास्यादीन् क्रमेणाह

[59b]कश्चित् सम्बन्धिगेहे बहुतरदिवसानन्तरं दैवयोगा-
दायातो, लज्जया स प्रचुरतरमहो भोजनं नैव चक्रे ।
रात्रौ क्षुत्क्षामदेहः श्लथतरगुडभुक् तूलराशौ पपात्
ध्वान्ते, प्रातः स्वरूपं हसति परिजनो वीक्ष्य जामातरं तम् ॥ १९॥

---

16a. B. गुरुणाम् 16c. B. आद्या
*P folio 94 begins from here.
16d. B. वृत्तविवर्त्तनम्
17a. B. मार्ग्रे 17d. B. स्थिताः
18b. B. –वशात् 18d. B. मांकल्यः
19b. P. प्रचुरतरः 19d. B. प्रांतः

प्रादुर्भूतः प्रबलदहनो वानरेन्द्रस्य पुच्छा-
दुड्डीनास्ते नभसि सभयं राक्षसा वायुवेगात् ।
अन्तःपुर्यां ज्वलनविधुरा देवगन्धर्वकन्या-
स्तासां तैस्तैः करुणवचनैः प्रस्तरो द्रावमेति ॥ २० ॥

येन स्वीयविशालबाहुबलतो मन्मेघनादो हतः
किंवा यैरनुमोदितं च हसितं दृष्टं च युद्धस्थले ।
एषोऽहं कुपितः करोमि सहसा तेषां शिरोभिर्ध्रुवं
सङ्ग्रामे ककुभां बलिं द्रुतमरे भृत्याऽऽनय स्यन्दनम् ॥ २१ ॥

सन्ध्यावन्दनतत्परेण हटतो लाङ्गूलबद्धो भवान्
पारावारजलेषु येन बलिना विभ्रामितो वालिना ।
एकेनैव शरेण हन्त स मया नीतः कृतान्तालये
रे रे रावण सोऽहमेष समरे त्वं सावधानो भव ॥ २२ ॥

कर्णाकृष्टशरासनोपरि शरं व्यापारयन्तं मुहु-
र्व्याधं वीक्ष्य पुनः पुनः प्लुतगतिं सम्पादयन् सत्वरम् ।
बाणाघातभिया पलायनपरः सङ्कोचयन् विग्रहं
विस्तीर्णाननिर्गतैर्नवतृणैर्व्या[60a]-प्नोति मार्गं मृगः ॥ २३ ॥

प्रेतः कश्चन पूतिगन्धिगलितं शूलात् प्रफुल्लं शवं
स्वीयाङ्के विनिधाय मांसपललं जग्ध्वा हृदादिस्थितम् ।
दंष्ट्राभिः क्रमशोऽस्थिसंस्थपललं भुक्त्वापि तृप्तोऽभव-
न्नो कश्चित्तदनंतरं स जठराद्भुङ्क्ते तथान्त्रादिकम् ॥ २४ ॥

20a. B. प्रादुर्भूत-, BP. पुछाद्   20c. B. अंतपूर्य्याम्, P. पूर्य्यां
21d. B. भृत्यादयः
22a. B. तत्परे, BP. हटतः   22b. P. बिभ्रा-
23b. B. वीक्ष्यम्, P संपादयत्   23d. B. मार्ग्रम्
24a. P. प्रफूल्लम्   24b. B. स्वीयंके, मांसलपजम्, जग्धा
24c. अभव   24d. अनंदरम्, जवरात्, भुक्ते

कैश्चिन्मान्त्रिकपूरुषैः सरभसं बीजं पुरः पश्यतां
सर्वेषां किल रोपितं क्षितितले वृक्षोऽभवत्तत्क्षणात् ।
शाखापल्लवपत्रपुष्पचयवान् जातो निमेषादहो
सर्वेभ्यस्तदनन्तरं फलमपि स्थित्वा रसालं ददौ ॥ २५ ॥

तादृक्तारुण्यतुङ्गस्तनकलशपरीरम्भसम्भारदम्भां
रम्भास्तम्भोरुयुग्मां मदकलमदिराघूर्णिताक्षीं विहाय ।
सौधोत्सङ्गप्रविष्टस्फुटकुसुमसमारब्धशय्यां च हित्वा
धन्यास्ते वीतरागा झटिति गिरितटे पद्मनाभं भजन्ते ॥ २६ ॥

इति श्रीमन्नाट्यशास्त्रे श्रीकण्ठकविविरचितायां रसकौमुद्यामुत्तरखण्डे रसवर्णनाध्यायः ॥ ७ ॥

25[a]. B. मात्रिक-, 25[c]. B. अहो
26[b]. B. राभा-, -युष्मामू, 26[c]. B.-सय्यामू 26[d]. B. बीत-
Colophon :— P. उत्तरषंडे, B. रसर्वनामा, P. -वर्णनाध्यायः समाप्तः ।

# अष्टमोऽध्यायः

अध्यायेऽप्यष्टमे स्त्रीणां शृङ्गारनिवहः क्रमात् ।
शृङ्गारेण विना शोभां न धत्ते कामिनी यतः ॥ १ ॥

स्नानं चीरं च हारः सुललिततिलकं कुण्डलं पुष्पमाल्यं
काश्मीराद्यङ्गरागो रुचिरनयनयोरञ्जनं रत्नरोचिः ।
नासामुक्ता सुकाञ्ची क्वणकलव[60b]-लयं नूपुरं कञ्चुकी वा
ताम्बूलं चातुरीत्थं षडधिकदशकाः सन्ति शृङ्गारकास्ते ॥ २ ॥

## तत्रादौ स्नानम्

गाढं निक्षिप्य गात्रे कुसुमपरिमलोद्गारि तैलं सुगन्धि-
द्रव्याङ्गोद्वर्तनं च प्रकटितचिकुरं चूर्णलिप्तं विधाय ।
हस्ताभ्यां मर्दयित्वा लघुलघु शनकैः कोष्णमाक्षिप्य तोयं
स्नाति प्रोच्चैः पयोभिः सरसिजनयना सौधवेदीनिविष्टा ॥ ३ ॥

कर्पूरागुरुचन्दनैर्मृगमदैः कङ्कोलचूर्णैरपि
स्वैरं वासितवारिभिः सहचरीहस्ताम्बुजावर्जितैः ।
सौधस्थानविराजिताऽऽसनमधि प्रक्षालयन्ती तनुं
स्नाति प्रोज्ज्वलपादुकोपरिपदाऽऽकण्ठं कुरङ्गेक्षणा ॥ ४ ॥

## ॥ अथ चीरम् ॥

व्यापारव्यग्रपाणिस्त्रिवलिसरलताकुञ्चितावर्तनाभि-
र्व्यालोलश्रोत्रपालिप्रकटितमदना नीविबन्धं विधाय ।
आपीतश्वेतनीलस्फुटकुसुमलतापल्लवालीविचित्रं
रक्तप्रान्तं पिधत्ते कनकचयचमत्कारिकौशेयवस्त्रम् ॥ ५ ॥

---

2c. B. स्कणकल-
3c. B. कोयम्
4a. P. –अगुर–
4d. B. स्ताति, प्रोज्वल-
After 5 P. अथ हार ॥

## ॥ अथ हारः ॥

सद्वृत्तस्थूलचन्द्रद्युतिचयचमत्कारिमुक्ताफलाना-
मादाय प्रान्तयुग्मं विकसितकमलद्रोहि हस्तद्वयेन ।
हारं माणिक्यमध्यप्रचुरतरलसन्नीलरत्नान्तरालं
प्रोत्कण्ठं कम्बुकण्ठी ग्रथितमविरलं पट्टसू[61ª]-त्रेण धत्ते ॥ ६ ॥

मध्योद्भासितपद्मरागरुचिरां सद्वृत्तमुक्तावलीं
नानारत्ननिबद्धहारलतिकां धत्ते कुरङ्गेक्षणा ।
यूनां तुङ्गकुचाऽचले विचरतां चेतोमृगाणाममुं
पाशं निर्भरबन्धनाय मदनव्याधस्य मन्ये परम् ॥ ७ ॥

## ॥ अथ तिलकम् ॥

आदौ पङ्किलकेसरस्य तिलकं श्रीखण्डचर्चां तत-
स्तन्मध्ये किल कुङ्कुमस्य रचनां कस्तूरिकायाः पुनः ।
धृत्वा दर्पणहेममुष्टिममलं दृष्ट्वास्यबिम्बं मुदा
चक्रे चन्द्रमुखी मनोजनृपतेरव्यर्थमुद्रामिव ॥ ८ ॥

दृष्ट्वा काञ्चनदर्पणे विधुमुखीवक्त्रस्य बिम्बं सखी
हस्ताम्भोरुहहेमपात्रमिलितं पाटीरपङ्कादिकम् ।
आदाय क्रमशो लिलेख तिलकं लावण्यलीलापयः
पूर्णे यौवनपल्वले मदकलप्रोन्मत्तहंसोपमम् ॥ ९ ॥

## ॥ अथ कुण्डलम् ॥

रत्नालीखचितं सुवर्णघटितं प्रान्तस्फुरन्मौक्तिक-
श्रेणीकान्तिविराजितं श्रुतियुगे ताटङ्कयुग्मं दधौ ।
तेन प्रोज्ज्वलमाननं मृगदृशः स्वैरं समुज्जृम्भते
चक्रद्वन्द्वविभूषितः किमु रथः कन्दर्पभूमीपतेः ॥ १० ॥

6ᵇ. B. द्वयेनम्
9ᵈ. B. मदकप्रो–
10ª. B. रत्नांली
10ᶜ. B. प्रोज्वल–, समुज्रंभते
10ᵈ. BP. विभूषितम्
After 10 B. पुष्कर्मल्यम्

## ॥ अथ पुष्पमाल्यम् ॥

उन्मीलन्मुग्धमाध्वीबहलपरिमलाऽऽहूतनानादिगन्त-
भ्राम्यद्भृङ्गीकदम्बं सुललितकुसुमारब्धलम्बायमानम् । [61b]
माल्यं जग्राह तुङ्गस्तनकलशपरिन्यासि पूर्णेन्दुवक्त्रा
मालामागुम्फितां किं बलमथनवधूर्नन्दनोद्यानपुष्पैः ॥ ११ ॥

प्रोत्तुङ्गस्तनयोरुपान्तमिलिता नानाप्रसूनोद्भवा
माला स्थूलतरा समा च शनकैस्तन्व्या मुहुर्भ्रामिता ।
मालाकारमनोभवस्य पयसो यन्त्रं हि नाभीह्रदा-
दुद्धर्तुं रसवारि भूरिमिथुनप्रेमद्रुसेकाय* किम् ॥ १२ ॥

## ॥ अथाऽङ्गरागः ॥

विम्बं वक्त्रस्य दृष्ट्वा स्फुरदुरुमुकुरे शुक्तिकारब्धमुष्टौ
तन्वङ्गी गौरगल्लस्थलमधिलिखति स्निग्धकस्तूरिकाभिः ।
प्रोत्कण्ठी नीलकण्ठं नटनपटुचलच्चन्द्रकं कुङ्कुमैश्च
व्यालं तच्चञ्चुमध्ये भयचकितफणालास्यलीलाविनोदम् ॥ १३ ॥

कस्तूरीस्निग्धलेपः कुचकलशयुगे केसराम्भोजशाली
पृष्ठे पाटीरपङ्कः सुललितलतिकामञ्जरीमञ्जुमाली ।
चर्चा कृष्णाऽगुरूणां जठरमधि भुजद्वन्द्वपार्श्वद्वये च
प्रद्युम्नाऽऽयोधनार्थं कवचमिदमियं व्याददे किं कृशाङ्गी ॥ १४ ॥

## ॥ अथाऽञ्जनम् ॥

प्रातः पङ्कजकान्तिभाजिशफरीसौन्दर्यसंवादिनी
भ्रूवल्लीरमणीयताऽधिकतरश्रीयुक्तनेत्रद्वये ।
तन्वी मञ्जुशलाकयाऽञ्जनमदाद् दृष्ट्वा मुखं दर्पणे
सद्यः शोणितसायके[62a] किविमुखं विक्षेपमर्मस्पृशि ॥ १५ ॥

---

11a. B. –बहुल–  11b. B. सुललिकु–  11d. –वधूर्नन्दनो
12b. B. समाय, तन्या  12c. B. नाभीहृदा–  13c. B. नीलकंठी–
* P. folios 98-99 are missing from here.
15c. B. अद्य दृष्ट्वा

दृगञ्चलमचञ्चलं विधुमुखी विधाय क्षणं
प्रियस्य हृदि रञ्जनं ललितमञ्जनं सन्दधे ।
विलोक्य मुकुरे मुखं मकरकेतुसञ्जीवनं
गुणः किमु मनोभुवो नयनखञ्जरीटग्रहे ॥ १६ ॥

## ॥ अथ रत्नरोचिः ॥

स्वर्णालङ्कृतिविस्फुरन्मणिनिभा विभ्राजते सुभ्रुवो
नागस्त्रीशिरसीव मञ्जुलमहाप्रोद्दीप्तरत्नप्रभा ।
सख्यग्रे रतितत्परे प्रियतमे निर्वाणतां प्रापिते
दीपे लज्जितया तया किल यथा गाढं तमो हन्यते ॥ १७ ॥
प्रौढप्रोज्ज्वलहीरकादिमणयः स्थूलप्रदीपोपमाः
प्रोद्दामप्रसरत्स्वकीयकिरणैर्ध्वान्तौघविध्वंसकाः ।
एवं यद्यपि ते तथापि वदनस्याग्रे कुरङ्गीदृशो
राजन्ते न हि तारकाः किल यथा राकाविधोरग्रतः ॥ १८ ॥

## ॥ अथ नासामुक्ता ॥

सर्वालङ्कारमध्येऽभवदधिकतरं मौक्तिकं नासिकायाः
सर्वेषां मानवानामिव मनुजपतिः सर्वसौभाग्ययोग्यः ।
स्थानं तत्रैव हेतुर्भवति न हि परं कारणं किञ्चिदास्ते
प्राधान्यं नासिकायामवयवविषये निश्चितं वेद्यमेतत् ॥ १९ ॥
नासामुक्ता सरसिजदृशो भाति गुञ्जासमाना
सङ्गाद् बिम्बाधरनयनयोरेव नान्योऽस्ति हेतुः ।
इत्थं सर्वो निगदति जनः के[62b]-वलं तत्तु मिथ्या
ब्रूमस्तत्त्वं वयमिह पुनः कारणं स्वच्छतैव ॥ २० ॥

16a. B. ॥ अचचलम् ॥ 17c. सखग्रे
18a. B. प्रोज्वल 18b. B. प्रोध्वंसिकाः
19c. B. किंचिदास्ते 19d. B. –विषयैः, निश्चितं विद्यम्
20b. B. संगान् 20c. B. सर्वे, निगादति, केववलम् 20d. B. तत्वम्, स्वच्छैव

## ॥ अथ काञ्ची ॥

उत्कूजन्ती नितान्तं पृथुतरजघनस्योर्ध्वभागे विचित्रा
भास्वन्माणिक्यहीराकनकमणिमयी भाति काञ्ची कृशाङ्ग्याः।
प्रोद्बद्धं मङ्गलार्थं स्मरधरणिपतेर्गोपुरे तोरणं किं
किंवा नाभीह्रदान्तःपयसि युवचरच्चित्तहंसस्य जालम् ॥ २१ ॥

## ॥ अथ वलयम् ॥

मध्ये सर्वं समानं मरकतवलयं कङ्कणं चोर्ध्वदेशे
सौवर्णं दन्तुरं तद् विविधमणिमयं वर्तुलं चाग्रभागे।
धत्ते पूर्णेन्दुवक्त्रा ललितमलयजालेपचारुप्रकोष्ठे
माध्वीकोन्मत्तगुञ्जन्मधुकरनिकरासङ्गिरत्नाम्बुजं किम् ॥ २२ ॥

## ॥ अथ नूपुरम् ॥

विद्युद्दामसपत्नरत्नखचितौ हैमौ रणन्नूपुरौ
तन्वङ्गी विनिधाय पादयुगले रक्तोत्पलप्रोज्ज्वले।
फुल्लाम्भोरुहकाननकणनकृत्कादम्बकेलीजुषः
कासारस्य तिरश्चकार विपुलां सौन्दर्यसारश्रियम् ॥ २३ ॥

## ॥ अथ कञ्चुकी ॥

श्वेतश्यामलशोणपिङ्गलगुणैश्चित्रीकृतां कञ्चुकीं
व्यावल्गद्भुजवल्लिकङ्कणझणत्कारं पिधाय द्रुतम्।
*हस्ताभ्यां विहितं सरोरुहदृशा तद्वीटिकाबन्धनं
तस्मात् किञ्चिदगूढगूढकुचयोर्द्वन्द्वं समुज्जृम्भते ॥ २४ ॥
तत्कालत्वरया प्रसारित[63a]-करद्वन्द्वाऽरविन्देक्षणा
हेमप्रोज्ज्वलपट्टसूत्रघटितैः पीतांशुकैर्निर्मितम्।

---

22b B. तत्  22d. B. रत्नांबुजे
23a. B. हेमौ  23b. B. प्रोज्वले  23c. B. क्वणनकृत्वा
24a. B. कंचकीम्  24b. B. व्यावला-
*P. folio 100 begins from here.  24d. अगूढमूढ, समुज्जंभते
25b. हेमः प्रोज्वल-

आदायोरसि कञ्चुकीं कुचयुगप्रोत्फुल्लमध्यस्थलां
पश्चाद्बन्धनमाततान विलसत्पृष्ठा मनोहारिणी ॥ २५ ॥

## ॥ अथ ताम्बूलम् ॥

कर्पूरादिसुवासिताऽतिमधुरं ताम्बूलमेणीदृश-
श्चर्वन्त्याः खदिरेण सुन्दरतरो बिम्बाधरो राजते ।
पीयूषाधिकमञ्जुलस्मितसुधाधाराभिरापूरितः
किं सन्ध्या परिपूर्णचन्द्रकिरणैर्युक्ता समुज्जृम्भते ॥ २६ ॥

## ॥ अथ चातुरी ॥

शृङ्गाराः क्रमशस्त्रिबाणगुणिता वामभ्रुवो वर्णिता
बाह्या एव भवन्ति ते नहि पुनः कोऽप्यन्तरङ्गो मतः ।
शृङ्गारः किल चातुरी निगदिता सर्वोत्तमा षोडशः
सर्वे निष्फलतां प्रयान्ति नितरामेणीदृशस्तां विना ॥ २७ ॥
शृङ्गारैः किमनर्घ्यरत्ननिवहस्वर्णादिभिर्निर्मितैः
शृङ्गारो यदि चातुरी निरुपमा वामभ्रुवां विद्यते ।
सा चेन्नास्ति मनागपि प्रियतमस्वान्तप्रमोदप्रदा
शृङ्गारैः किमनर्घ्यरत्ननिवहस्वर्णादिभिर्निर्मितैः ॥ २८ ॥
चाञ्चल्यं नयनाञ्चले, विकसितं स्मेराननाम्भोरुहं
पीयूषाधिकमञ्जुलं मृदुपदोपन्यासमल्पं वचः ।
उत्तुङ्गस्तनगोपनं सचकितं चीनांशुके[ 63b ]-न द्रुतं
लीलाम्भोरुहधूननं वरतनोरित्यादिका चातुरी ॥ २९ ॥

25c. B. कंचुकी P. –प्रोत्फूल्ल– 25d. B. आतताव
26a. P. कपूरादि–
26c. B. आर्पूरितः– 26d. B. समुल्लंभते
27a. B. शृंगाराम् 27a. P. –भ्रूवोर्वर्णिताः
27c. P. षोडशी 27d. BP. निःफलताम्, प्रयाति
28a. B. स्वर्णोदिभि–, P. निमितैः 28b. B. विधुते 28d. B. –निवहः
29c. B. उत्तंग

उन्मत्तद्विपमन्दमन्दगमनं वक्रेक्षणाऽऽलोकनं
हस्तान्दोलनलोलकङ्कणझणत्कारप्रपञ्चं वचः ।
भ्रूवल्लीभ्रमणं, समं प्रियतमेनाऽऽहार्यकोपक्रमः
शृङ्गारस्य हि मण्डनं वरतनोश्चातुर्यमित्यादिकम् ॥ ३० ॥

विज्ञत्वं विनये नये, मनसिजक्रीडाकलाऽभिज्ञता
भर्तर्येव रतिर्, दया परिजने, लज्जा गुरूणां पुरः ।
सर्वांशेन सखीगणे सरलता, स्पर्धा सपत्नीजने
पाकादिष्वपि कौशलं कुलवधूचातुर्यमित्यादिकम् ॥ ३१ ॥

**इति श्रीमत्साव्यशास्त्रे श्रीकण्ठकविविरचितायां रसकौमुद्यामुत्तरखण्डे षोडशशृङ्गारवर्णनो नामाध्यायोऽष्टमः ॥ ८ ॥**

---

30c. B. भ्रूवल्लि–, P. नीहार्य–, B. –कोपः
31b. B. भर्त्तर्येव, B. गुरः P. पुराम् 31c. B. स्पर्द्धास्यपत्नी–
31d. B. कोशलम् Colophon : P. वर्णनो नाम

# नवमोऽध्यायः

ऋतूनां वर्णनं युक्त्या नवमे क्रियते क्रमात् ।
ऋतवो विविधैर्भोगैस्तन्वन्ति मुदं यतः ॥ १ ॥

ऋतुषु ऋतुषु योग्यं वेषमादाय दिव्यं
रचयति किल लास्यं नर्तकी चारुनेत्रा ।
नवनवरतिनाथप्रौढ क्रप्रमोद-
प्रकटितकमनीयस्पष्टचेष्टाभिरामा ॥ २ ॥

नित्यं भूरिभुजङ्गसङ्गमरतां दृष्ट्वा प्रियां दक्षिणां
श्रीखण्डैरपि मञ्जुलां सुललितां मुक्ताफलाद्यैरपि ।
[64a] सन्त्यक्तुं कृतनिश्चयोऽपि पवनः कान्तामुदीचीं परां
गन्तुं कोकिलमित्रवर्यवचनापेक्षः क्षणं तिष्ठति ॥ ३ ॥

आद्योद्याननिकुञ्जकुन्दलतिकां त्यक्त्वा द्विरेफावली
माकन्दं परितः प्रयाति मुकुलैर्नव्याङ्कुरैर्मञ्जुलम् ।
उद्गीवं चिरविस्मृतं परभृतैः सङ्गीतमभ्यस्यते
तन्मन्ये पदमर्पितं वनमधि स्वैरं वसन्तश्रिया ॥ ४ ॥

भृङ्गीसङ्गीतरङ्गप्रचलितकुसुमोद्धूतमाध्वीकभाजां
माकन्दादिद्रुमाणां बहलपरिमलैर्मुग्धमध्यप्रदेशम् ।
वासन्तीनां परागैः पवनविलुलितैः पूर्णपीताङ्गरागं
पुष्पोद्यानं वसन्ते प्रकटयति मुदं भूतले नैव केषाम् ॥ ५

स्वच्छन्दं मधुपानमत्तमधुपा गुञ्जन्ति कुञ्जोदरे
वापीतीरसमीरणः कुसुमितां वल्लीं धुनीतेऽधुना ।

---

3b. B. मुक्तापली-
3c. B. संत्यक्तम्
4a. P. त्यक्ताम्
4b. B. निव्यांकुरे
4c. B. परिभृतै
4d. P. यन्मन्ये
5a. B. -माद्विक-
6a. B. स्वछन्दम्

माकन्दे च कुहुः कुहूरिति मुहुः कूजन्ति पुंस्कोकिलाः
पुष्पोद्यानमतः परं नरपतिर्नारीसखः सेवते ॥ ६ ॥

पुष्पोद्यानत्वरितगमनव्याकुलानेकनारी-
हस्ताम्भोजे कनकरचितं भाति पात्रं विचित्रम्।
ताम्बूलानां विमलपयसामङ्गरागादिकानां
चैत्रक्रीडाकुतुकितमनो मेदिनीनायकस्य ॥ ७ ॥

पु[64b]-ष्पोद्यानस्य मध्ये मृगमदपयसा भूरिसंसिक्तभूमौ
नानारूपैरनेकैः किसलयकुसुमैर्निर्मितानल्पतल्पे।
कान्तावक्त्रारविन्दस्फुरितपरिमलं चित्रितं लोचनाभ्यां
हेम्नः पात्रेण चैत्रे पिबति नरपतिर्वारुणीमङ्गनाभिः ॥ ८ ॥

उद्यानस्यैव मध्ये कुसुमतरुतले स्पृष्टरोलम्बचेष्टे
पीत्वा मद्यं प्रियाभिः सममममृतमिवामर्त्यकन्याभिरिन्द्रः।
व्यक्ताऽऽनन्देन युक्तो मधुमधुरवचः कोमलाभिः कथाभिः
स्वैरं मध्याह्नकालं गमयति नृपतिः कोविदः कामशास्त्रे ॥ ९ ॥

गन्धद्रव्यविलेपनं वितनुते भूपो वसन्तागमे
कर्पूरादिसुवासितेन पयसा स्नाति प्रियाभिर्वृतः।
गोधूमादिपुराणमन्नममलं भुङ्क्ते च हित्वा गुडं
जीर्णक्षौद्रमपि स्वकीयहितकृद् वैद्यान्वितः सर्वदा ॥ १० ॥

**॥ इति वसन्तः ॥**

मार्तण्डोऽतिप्रचण्डः सकलजनमनोहारि बिम्बं हिमांशोः
सर्वत्र क्षीणनीरा निरवधिसलिलस्यावगाहात्सरस्यः।
रम्या जाता दिनान्ता व्रजति च शनकैर्यत्र शान्तिं मनोभूः
स्वैरं स ग्रीष्मकालो भुवि सुखमवनीनायकस्यैव धत्ते ॥ ११ ॥

---

6c. B. कुहुरिति, कुंजति    7d. BP. मेदनी
8b. B. किशलय-    9a. P. स्पष्ट-, B. -रोलम्बलेऽटे
9b. P. -कंन्याभिरिद्धः    10b. B. वृताः    10c. B. -मन्नममलम्
10d. P. हितकृत, B. हितकृत्वै-    11a. P. जनममो-    11c. B. दिनाना, P. व्रजति

उन्मीलत्पाटलालीसुललितकुसुमासक्त[65ª]-सौरभ्यभव्यः
कासाराभ्यर्णभूमौ प्रसरति पवनः कम्पयित्वा वनानि ।
सङ्गीतं भूरि भृङ्गी रचयति नितरां सीम्नि मल्लीलतानां
भूपो ग्रीष्मे विधत्ते युवतिजनसखः काममम्भोविहारम् ॥ १२ ॥

भूपालो जलयन्त्रमन्दिरमधि स्थित्वा प्रसूनावली-
शय्यायां कलकण्ठकण्ठललनारागं समाकर्णयन् ।
पाटीरद्रवचर्चिताङ्गसुभगः कान्ताकराम्भोरुह-
व्यालोलव्यजनेन वीजितवपुर्मध्याह्नकालं नयेत् ॥ १३ ॥

द्राक्षामञ्चादधस्तात् स्तबकसमुदयव्याप्तचारूर्ध्वभागा-
च्छ्रीखण्डोशीरतोयैर्मृगमदललितैर्भूरिसंसिक्तभूमौ ।
मल्लीव्यूहप्ररोहप्रचलदलिहतादित्यचण्डप्रभायां
गीतैर्नृत्यैर्विनोदैर्विलसति वनिताचक्रगो चक्रवर्ती ॥ १४ ॥

रम्भास्तम्भोरुकम्रा कनकगिरिसमुत्तुङ्गवक्षोजनम्रा
राकापूर्णेन्दुवक्त्रा विकसितकमलद्रोहिनेत्रद्वयाढ्या ।
तन्वङ्गी वेदिमध्या पृथुतरजघना सर्वसौन्दर्ययुक्ता
मुक्ताहारादिकस्य स्फुरति वरतनुर्मण्डनं मण्डनस्य ॥ १५ ॥

श्रुत्वा सीमन्तिनीनां तरलतरकरे झंकृतिं कङ्कणाना-
मुड्डीनं चारु चक्रुः सचकितचपलाश्चक्रवाका बलाकाः ।
रोलम्बाः स्वीय[65ᵇ]-जातिध्वनिरिति नयनद्वन्द्वमुद्वीक्ष्य सद्यः
पद्मभ्रान्त्या विलोला वदनमधि करं धुन्वतीनां निपेतुः ॥ १६ ॥

क्रीडाकौतुकतत्परेण धरणीनाथेन सार्धं स्त्रियः
पुण्योद्यानसरोवरस्य सलिलाभ्यन्तः प्रविष्टा द्रुतम् ।

12ᵇ. B. प्रसरितपवनः 12ᶜ. B. सीम्नि 12ᵈ. B. –जनभवेः
13ª B. जलजंत्र– 13ᵇ. B. कलकंठललना, –कर्णयेत्
13ᵈ. P. मध्याह्न– 14ª. B. अधस्ना, P. स्तबक–
14ᵇ. B. मृगमद– 14ᶜ. B. –प्रवदल– 15ª. P. –तम्ना B. –वक्षोज–
16ª. B झिंकृतिम् 16ᵇ. B. मुड्डीनम्, चक्रुः
16ᶜ. B. ध्वनिरति, नयमुद्विक्ष्य 17ª. B. धरिणी– 17ᵇ. B. सलिला–

तासामाननकौमुदीभिरखिलं पङ्केरुहं मुद्रितं
भृङ्गा रात्रिधिया पतन्ति नयने नीलोत्पलस्य भ्रमात् ॥ १७ ॥

तस्या वक्त्रं विकचकमलप्रोज्ज्वलं सौरभाढ्यं
नेत्रद्वन्द्वं मदभरमदोन्मत्तरोलम्बकल्पम् ।
धम्मिलोऽपि स्तिमितकुटिलश्यामलः शैवलाभः
कासारान्तः स्फुरति नृपतेः पद्मिनी पद्मिनीव ॥ १८ ॥

कस्यैचित् करपङ्कजे सुललिते लीलारविन्दं ददौ
कस्यैचिज्जलकेलिकौतुकवशान्नीलोत्पले कर्णयोः ।
कस्यैचित्कुचयोरुपान्तमिलितं हारं मृणालोद्भवं
कस्यैचिद्बिसवल्लिकङ्कणचयं पाणौ प्रियायै प्रियः ॥ १९ ॥

त्यक्त्वा केलिसरोरुहं विकसितं हस्तारविन्दोपरि
स्वच्छन्दं मकरन्दमत्तमधुपा गच्छन्ति वामभ्रुवः ।
हित्वा च स्फुटनीलपङ्कजयुगं कर्णावतंसीकृतं
प्रस्निग्धाञ्जनमञ्जुलाक्षियुगलस्योर्ध्वं पतन्ति द्रुतम् ॥ २० ॥

पश्चात्षट्पदबाधिता विधुमुखी हस्ताम्बुजं धुन्वती
प्रोवाच त्वरितं प्रियं प्रति परि[66a]-त्राहीति दीनं मुहुः ।
श्रुत्वा कातरभाषितं प्रियतमो भृङ्गं निवार्य द्रुतं
तामालिङ्ग्य दृढं चुचुम्ब वदनं तस्याः शशाङ्कोज्ज्वलम् ॥ २१ ॥

चञ्चत्काञ्चनकङ्कणव्यतिकरस्फारस्फुरन्निःस्वन-
व्यालोलाङ्गुलिपाणिपल्लवपयःक्षेपं मुहुस्तन्वती ।
अन्योन्यं वदनाम्बुजोपरि जलक्रीडाकलाकौतुकात्
तन्वङ्गी निखिलं तनोति नृपतेः कासारमध्ये मुदाम् ॥ २२ ॥

---

20[a]. BP. –अरविंदो– 20[b]. B. स्वछन्दम् 20[c]. B. स्फटनील–
20[d]. P. द्रुवम् 21[a]. B. षट्षदबाधिता, P. तन्वती
21[b]. P. त्रहोति ( corrected as त्राहीति ) 21[c] P. निर्वार्य
21[d]. BP. दृष्टम् 22[a]. P. –कंकणध्वनिभर–, B. –स्वारस्फुर– P. –निस्वन–
22[b] B. पयःक्षेपम्

बिम्बोष्ठाधरशोणिमा समगमन्नेत्रद्वये निर्भरं
धावल्यं चलितं तयोस्तदुपरि प्रायोऽभवद् व्यत्ययः ।
लग्नं चीननिचोलमङ्गविषये सर्वाङ्गकं दृश्यते
भूभर्तुर्जलकेलिवेषरुचिरा नार्यो मुदं तन्वते ॥ २३ ॥

कासाराज्जलकेलितृप्तहृदयः सीमन्तिनीभिः समं
द्राक्षाणां वलयक्षितौ क्षितिपतिः प्रोत्थाय तस्थौ क्षणम् ।
तं वेषं त्वरितं विहाय नृपतेर्योग्यं गृहीत्वाऽखिलं
श्रीखण्डाद्यनुलेपनं युवतिभिः सार्धं चकार द्रुतम् ॥ २४ ॥

स्वैरं नानापरिमलपदार्थाङ्गरागं विधत्ते
मध्येऽप्यह्नः कुसुमनिवहारब्धतल्पे च निद्राम् ।
सौधोत्सङ्गे हिमकरकरासङ्गशीतातिमुग्धं
दुग्धं रात्रौ पिबति नृपतिः शर्करास्वादुयुक्तम् ॥ २५ ॥

कर्पूरागुरुचन्दनोद्भवनवस्निग्धाङ्गरागोज्ज्वला
[66b] प्रोत्तुङ्गस्तनभारभङ्गुरतनुर्वेदीव मध्ये कृशा ।
सौधागारनिविष्टपुष्पशयने चन्द्रांशुभिः क्षालिते
राज्ञः कामकलाकलापकुशला भाग्येन भोग्या भवेत् ॥ २६ ॥

॥ **इति ग्रीष्मऋतुः** ॥

हर्षं सञ्जनयन् कृषीवलमनोमध्ये पुरा निर्भरं
पश्चात् सूर्यकराभितप्ततनुभृत्सन्तोषमुत्पादयन् ।
दग्धानां दवपावकैः शिखरिणां तापोपशान्तिक्षमो
नीलग्रीवसुखावहः समुदितः कालः पयोदागमः ॥ २७ ॥

23a. P.– शोणिता, B. नेत्रद्वाय 24a. B. –तृप्ति– 24c. P. तं वेष
25a. P. वियते ( corrected as विधत्ते ) 25b. B. कुमसुम–
25c. B. हिमकरा संग– 25d. B. राज्ञो, P. शार्करा–
26a. P. –अगुर– B. –रागोजला 26c. B. –पुष्फ–
27a. P. कृषीवल– 27d. P. नीलप्रव ( corrected as –ग्रवी )

अथ श्यामलवारिवाहनिवहव्याप्तं नभोमण्डलं
दृष्ट्वा ताण्डवमातनोति नितरां माद्यन्मयूरावली ।
हित्वा सम्प्रति पाटलां मधुकरो नष्टप्रसूनां गतो
नीपालीं गतयौवनामिव वधूं कामी नवोढां पराम् ॥ २८ ॥

श्यामोद्दामपयोदवृन्दनिनदैरत्यन्तभीमं नभ-
श्चञ्चच्चातकचारुचञ्चुचपलव्याहाररम्या द्रुमाः ।
अत्युत्कण्ठितनीलकण्ठमिथुनप्रोद्गीर्णकेकाकुला
जाता भूमिधरा, धराऽतिमधुरा मुग्धैस्तृणैर्नूतनैः ॥ २९ ॥

धूपैर्धूपितमुग्धमन्दिरमभि प्रोत्तुंगतूलातले
कर्पूरादिसुवासिते शशिमुखीपीनस्तनालङ्कृते ।
स्वच्छन्दं शयनं करोति सुकृती तादृक्पटीभिः पुटी-
कृत्याङ्गानि [67a] मनोजकेलिकुशलस्ताम्बूलपूर्णाननः ॥ ३० ॥

प्रादुर्भूतशिलीन्ध्रवृन्दरुचिरा बाष्पोद्गमं तन्वती
स्वच्छन्दं क्षितिरिन्द्रगोपपटलीपूर्णाङ्गरागोज्ज्वला ।
प्रोद्यद्दर्दुरदीर्घनादमुखरा धाराजलप्लाविता
शश्वद्वृष्टिविशालपङ्ककलुषा वर्षासु जाताऽधुना ॥ ३१ ॥

जीमूतोदरभूरिदीर्घपरुषप्रोद्भूतभीमध्वनिं
श्रुत्वा काचन कामिनी सचकितं भर्तारमालिङ्गति ।
कान्तोऽपि द्रुतमादरेण रभसादालिङ्ग्य पीनस्तनीं
तां कान्तामधिकं चुचुम्ब चपलापाङ्गां चलद्भ्रूलताम् ॥ ३२ ॥

श्रुत्वा ध्वानं सभयचकितं भूरि कादम्बिनीनां
श्रेणीबद्धाः शिखरिशिखराद्राजहंसा द्रवन्ति ।

---

29a. B. श्यामोदाम– P. श्यमोदाम– ( corrected as श्यामो– )
29b. P. व्याहारम्या ( corrected in the margin )
29c. P. अत्युकंठिन, केकाकुली  30a. P. प्रोतुंगतूली–  30c. B. स्वच्छन्दम्
30d. B. तंबूल–  31b. B. स्वच्छन्दम्–, रागोज्वला
32b. P काचन  32d. B चचुंब
33b. P. श्रेणि–

दृश्यन्ते च प्रतिदिशं तिर्यग्विमुक्ता बलाका
नीलाम्भोदे सुरधनुरपि क्वापि चित्रं विभाति ॥ ३३ ॥

नद्यो जाताः कलुषसलिलाः पादपाः पूर्णपर्णा
झंझावाताश्चपलचपलाचित्रिता चारुमेघाः ।
ग्रामाद्ग्रामं व्रजति न जनो, दृश्यते नार्कबिम्बं
छन्नं गेहं पवनरहितं सेवते सर्वलोकः ॥ ३४ ॥

प्रायः पद्भ्यां न चलति जनो जीर्णधान्यानि भुङ्क्ते
कूपस्याम्भः पिबति सुरभिद्रव्यसेवां विधत्ते ।
धत्ते नित्यं वसनममलं धूपितं गन्ध[ $67^b$ ]-धूपैः
प्रावृट्कालो जनयति सुखं भाग्यभाजां जनानाम् ॥ ३५ ॥

[ ॥ इति वर्षर्तुः ॥ ]

॥ अथ शरत् ॥

नद्यो निर्मलवारिवीचिसुभगा वर्षाव्यपायेऽभवन्
फुल्लाम्भोरुहकानने मधुकरा माद्यन्ति पीत्वा मधु ।
हंसाः सारसपङ्क्तयोऽपि नलिनीपत्रान्तराले समं
कान्ताभिः कलसिञ्जितं मदभरोन्मत्ता मुहुस्तन्वते ॥ ३६ ॥

प्राचीं कुङ्कुमपङ्करागरुचिरां सम्पाद्य कान्तामिव
स्वैरं तत्कुचपूर्वपर्वततटे दत्वा करं सादरम् ।
मुद्राभञ्जनतत्परः कुमुदिनीपुष्पोच्चयानाममुं
सायं भाति हि रागिणां कुतुकिनामानन्दकन्दो विधुः ॥ ३७ ॥

मुक्ताहारं मलयजरसोशीरकर्पूरचर्चां
स्फूर्ज्जच्चन्द्रप्रतिमवसनं चन्द्रिकां सायमिन्दोः ।
सौधागारं विहितसलिलं शर्करामुग्धदुग्धं
कान्तां रम्यां शरदि भजते भाग्यवानेव भोगी ॥ ३८ ॥

$33^c$. B. प्रप्रतिदिशम्
$34^b$. B. तादृमेघाः
$34^c$. P. दश्यते नार्क-
$36^a$. BP. अभवत्
$36^b$. B. पुल्लांभोरुह-

मन्दं मारुतकम्पितैर्विकसितैः काशैर्दिशः प्रोज्ज्वलाः
शुभ्राभ्रकदम्बकैरतितरामाकाशमुज्जृम्भते ।
प्रायः पङ्ककलङ्कहीनधरणी धत्ते जनानां मुदं
जातं सर्वमपूर्वमेव शरदि प्रीतिप्रदं प्राणिनाम् ॥ ३९ ॥

प्रायः सर्वे विदधति जनाः सादरं तीर्थयात्रां
युद्धं कर्तुं व्रजति रिपुणा सार्धमुर्वीश्वरोऽपि ।
देवीपूजामपि[68a] वितनुते सोत्सुकः सर्वलोकः
शोकः केषामपि न शरदि स्वान्तमध्ये विभाति ॥ ४० ॥

फुल्लाम्भोरुहरेणुपिङ्गलचलद्वीचीविलोलाः खगाः
कान्ताभिर्मदनातुरातिचतुराः कूजन्ति केलीपराः ।
पाठीनादिपराहतं च सलिलं यस्योर्ध्वमायाति तत्
केषां नो विदधाति शारदसरः सन्तोषमुच्चैस्तराम् ॥ ४१ ॥

कादम्बः कलकूजितातिसुभगः कान्तामदूरस्थितां
सम्भाष्योरुतरङ्गसङ्गतरलां वक्त्रे मृणालं ददौ ।
तत्पश्चाद्वरटाऽपि चाटुचटुला भुक्तावशेषं बिसं
भर्तुश्चञ्चुपुटे ददाति सदयं चञ्चूपुटेन द्रुतम् ॥ ४२ ॥

माध्वीमुग्धमपि प्रसन्नकमलं भृङ्गोऽर्धमुद्रायितं
त्यक्त्वा सम्प्रति कैरवस्य विपिने गुञ्जन् समागच्छति ।
किंवाऽऽसन्नवियोगकोकमिथुनं चञ्चूपुटाभ्यामहो
धृत्वैकं बिसमर्पिताक्षियुगलं प्राच्यां परं सीदति ॥ ४३ ॥

---

39a. B. प्रोज्वला
40b. B. कत्तु, कर्त्तं-    40d. स्त्वान्त-
41a. B. पुल्लांभोरुह-  P. -वलद्विची-    41c. B. आयाति तूत्
42b. P. चक्के    42c. BP. बिशम्
43b. B. गुंजत्    P. समागछति    43c. B. किंवा,..पुटाभ्यांमहो
43d. B. विशम्    P. बिशम्

ज्योत्स्नाव्यूहविभूषिताङ्कमधुरस्निग्धेन्दुमञ्जुप्रभा
नैवेयं प्रतिभाति तारकगणैः पूर्णीकृता शर्वरी ।
कल्लोलैरतिपूरितो बहुविधैरापूरितो बुद्बुदै-
र्दुग्धाम्भोनिधिरेष वासुकिफणानिद्रायितः श्रीपतिः ॥ ४४ ॥

बन्धूकासनबाणपुष्पपटलीमाध्वीपरागान्वितो
वापीरोधसि वायवीयपवनः सप्तच्छदं प्रा[68b]-सवान् ।
दष्टः कोटरसन्निविष्टभुजगीदन्तेन सम्मूर्छितो
मन्दं मन्दमलिन्दसुन्दरवधूस्वेदोद्गमं गाहते ॥ ४५ ॥

## [॥ इति शरत् ॥]

## ॥ अथ हेमन्तः ॥

उद्यानं सुप्रसन्नं सुललितलवलीलोध्रपुन्नागपुष्पै-
र्गुञ्जद्दोलम्बकुञ्जप्रकटकलकलोद्गीर्णकर्णप्रमोदम् ।
मन्दं मन्दं कुबेराचलपवनचलत्पादपाऽऽलीप्रसूनं
सर्वेषामेव चित्ते प्रकटयति मुदं वर्धयित्वा मनोजम् ॥ ४६ ॥

अत्युद्दामहिमेन हन्त निखिलं पङ्केरुहाणां वनं
दग्धं क्वापि जलाशयेऽब्जकुसुमं स्वप्नेऽपि नो दृश्यते ।
तस्मादेव सरोवरस्य सविधे कोऽप्येकभृङ्गो मनाग्
नायात्येव हि लाभलोभमनसा सर्वे भजन्ते जनाः ॥ ४७ ॥

वातघ्नं यत्र तैलं, मदमुदितवधूतुङ्गवक्षोजसङ्गः,
काश्मीरस्याङ्गरागः, सुललितलवलीमुग्धताम्बूलभोगः ।
धूपैः कृष्णागुरूणां ललितपरिमलैर्वासितं तल्पगेहं
हेमन्तो भाग्यवन्तं सुखयति, न पुनर्भाग्यहीनं कदाचित् ॥ ४८ ॥

---

44a. P. -स्निग्धेंदुम् 44b. B. नारक- P. -गणे 44c. B. बहुविवै- P. बुबुदै (corrected by other hand in the margin) 44d. P. -निद्रायित
45b. BP. सप्तछदम् 45c. P. कौटर-
46a. B. -लोद्र- 46b. B. -कीर्ण- 46d. B. वर्द्धयित्वा Before 45 P. हेमन्त ॥
48a. P. -वधूतुंग- 48b. P. -रागो, -भागः

कृत्वा व्यायाममुच्चैः कुशलजनसखः स्नाति तप्तैः पयोभि-
र्भुङ्क्ते पुष्टं च मांसं पिबति युवतिभिर्मद्यमत्यग्रचित्तः ।
वस्त्रैरुष्णस्वभावैर्विरचितशयने प्रावृतो याति निद्रां
सर्वैरेव[69ª] प्रकारैर्भवति सुकृतिनः शीतकालः सुखाय ॥ ४९ ॥

नानानूतनधान्यभोगमधुना कुर्वन्ति सर्वे जना-
स्तप्ताङ्गारकृतोष्णचारुभवने तन्वन्ति निद्रां पुनः ।
प्रातःकालदिवाकरीयकिरणं गृह्णन्ति पृष्ठोपरि
प्रायो ग्राम्यजना भवन्ति सुखिनः स्वल्पव्ययेन ध्रुवम् ॥ ५० ॥

प्रातः प्रांशुप्रियङ्गुद्रुमदरविदलत्पुष्पसौरभ्यभव्यः
कौबेराशासमीरः कुचकलशलसत्कञ्चुकीप्रान्तभागम् ।
स्वच्छन्दं कम्पयित्वा चकितमृगदृशः सीत्कृतिव्यग्रमुख्या
रोमाञ्चोद्भेदवत्या विलुलितचिकुरं गाहते वान्तमाल्यम् ॥ ५१ ॥

कान्तिं पूर्वानुरूपां किरति न हि मनाङ्मण्डलं चण्डभानो-
र्न क्रीडन्ति स्मरार्तास्तुहिनकरकरक्षालिते पुष्पतल्पे ।
प्रोच्चैः प्राप्नोति ह्रासं दिनमनुदिवसं दिग्विवर्णा हिमेन
प्रायः सर्वोऽपि शीते त्यजति निजकलां हन्त कालस्वभावात् ॥ ५२ ॥

पाकागाराद्गुडानां वियदतिमलिनं श्यामलोद्भूतधूमैः
सर्वैरापक्वधान्यैर्धरणिरतितरां गौरवर्णा विभाति ।
हस्ताभ्यां मर्दयित्वा दिशि दिशि कृषका भर्जितं धान्यमुष्णं
फूत्कारैर्निस्तुषं तत् सरभसमधुना निर्भरं चर्व[69ᵇ]-यन्ति ॥ ५३ ॥

## [॥ इति हेमन्तर्तुः ॥]

## ॥ अथ शिशिरः ॥

---

49ª. B. व्यायामनुच्चैः, पयोभिः 50ª. B. जना 50ᶜ. B. पृष्ठो-
51ª. B. –दुड्डमदर–, –पुष्फ– 51ᵇ. BP. कौबेराशा- 51ᵈ. B. गहते
52ᶜ. B. प्रोच्चै
53ª. B. उद्भूत- 53ᶜ. P. कृषिका 53ᵈ. B. चर्वयंति

प्रादुर्भूता हिमानी मकरगतरवौ निर्भरं सर्वलोकाः
सेवन्ते यत्र वह्निं प्रतिगृहमधुना भूरि गुप्ता गवाक्षाः ।
किं चैतस्यां प्रयाति ध्रुवमखिलजनो वस्त्रमुष्णस्वभावं
दीर्घां रात्रिं युवानो युवतिकुचतटीसङ्गरङ्गान्नयन्ति ॥ ५४ ॥

धत्ते क्षीणतमैकहारमधुना कण्ठे सुकण्ठी परं
काञ्चीं काञ्चननिर्मितां वितनुते मध्ये सुमध्या न हि ।
गाढालिङ्गनवामनीकृतकुचा निद्राति तुङ्गस्तनी
प्रस्निग्धागुरुधूपधूपितमितः कायं करोति प्रिया ॥ ५५ ॥

चन्द्रस्याद्य न चन्द्रिकां युवतयः कुत्रापि भर्त्रा समं
सेवन्तेऽङ्गणसीम्नि पुष्पशयने केलिकलाकौतुकात् ।
किं च क्वापि सरोवरस्य सलिले नो दृश्यते पङ्कजं
भृङ्गाः कुन्दमरन्दतुन्दिलतरा गुञ्जन्ति कुञ्जोदरे ॥ ५६ ॥

भूमावास्तरणं विनैव शयितः प्रोच्चैरनाच्छादिते
प्रायो भग्नसमग्रभित्तिभवने निद्राति नैव क्षणम् ।
अन्योन्याहतदन्तपङ्क्तिनिनदैरालिङ्ग्य जानुद्वयं
रङ्कः कम्पितविग्रहः शिव शिव प्राप्नोति कष्टं महत् ॥ ५७ ॥

तुषारकरतारकाप्रकरकान्तिरद्य स्फुटं
तुषारसमुदायतः स्फुरति नैव पूर्वं यथा ।
दिवाकरकरा अपि प्रचुरको[70a]-कदुःखापहा
दिवामुखसमागता दधति नैव काञ्चिद् द्युतिम् ॥ ५८ ॥

54a. B. सवीलाकाः 54b. B. गवाक्ष्याः
54c. B. ध्रुवनखिल- 55b. BP. कांची 55c. B. निद्राति
56a. B. चंद्रकाम् 56b. B. सेवंतेगण- P. सेवंतेऽवण-
57a. B. शयतः, B. प्रोचैरनाच्छाविते 57b. P. निद्राति 57c. P. आलिंग्यम्
58b. B. -संमुदायतः, यथा 58c. B. -कोप- 58d. P. -समगता, B. किंचिद् P. किंचित्

एकत्र स्थगयन्ति हन्त मदनक्रीडाकलाः कामिना-
मन्यत्र प्रबलो न नश्यति रथाङ्गानां वियोगाऽनलः।
इत्थं हन्त बलाबलं दिनकरः स्वान्ते विचार्य ध्रुवं
मन्दं मन्दमुपैति पूर्वशिखरिप्रोत्तुङ्गशृङ्गोपरि ॥ ५९ ॥

## [ ॥ इति शिशिरः ॥ ]

इति श्रीमन्नाट्यशास्त्रे श्रीकण्ठकविविरचितायां रसकौमुद्यामुत्तरखण्डे षड्ऋतुवर्णनाध्यायो नवमः ॥९॥

59[a]. B. स्थगयंनि 59.[c]. B. दिनकर-
:— B. षड्

# दशमोऽध्यायः

वक्ष्यामि दशमेऽध्याये नृपनीतिमनेकधा ।
यतस्तया विना भूपाः सम्यङ्‌ न स्युर्विवेकिनः ॥ १ ॥

यो जानाति समग्रनीतिमखिलां कन्दर्पलीलाकलां
वैदग्धीं मधुराङ्गनाशतयुतो नित्यं वदान्योत्तमः ।
नानालङ्कृतिमञ्जुलः सुवदनः सम्पूर्णवित्तान्वितो
नाट्यं तस्य महीपतेर्वितनुते शोभां परां नान्यथा ॥ २ ॥

उत्थाय प्रातरेव प्रतिदिनमवनीनायको देहधर्मं
कृत्वा स्नानं च विष्णोः स्मरणमथ शिरोवेष्टनं चारु बद्‌ध्वा ।
कुर्यात् कस्तूरिकाद्यैः सुललिततिलकं दर्पणे वीक्ष्य बिम्बं
श्रुत्वा पञ्चाङ्गवाक्यं श्रुतशिववचनं नित्यदानं च दद्यात् ॥ ३

साचारद्विजवैद्यदत्तनिखिलव्याधिघ्नयोग्यौषधं
भुक्त्वा[70b] पुष्पसुवासितेन पयसा प्रक्षाल्य वक्त्रान्तरम् ।
कङ्कोलत्रुटिचन्द्रचन्दनलवङ्गाद्यैर्विमिश्रीकृतं
ताम्बूलं हितसेवकार्पितमतो भुञ्जीत भूमिपतिः ॥ ४ ॥

कर्पूरागुरुकेसरादिरचितव्यक्ताङ्गरागोज्ज्वल-
श्चोलालङ्करणादिकं नरपतेर्योग्यं गृहीत्वाऽखिलम् ।
एकान्ते श्रुतलोकचेष्टितकथश्चाराननात्तत्परं
गच्छेत् सेवकमित्रमन्त्रिसहितो भूपः सभामण्डपम् ॥ ५ ॥

---

1b. B. –नीतिमानकधा  1d. BP. सम्यगुन
2b. B. वैदग्धी–  2c. B. सुवदना–  2d. B. परम्
3b. B. स्मरणमथ  3c. B. कस्तुरिका–  3d. B. श्रुतशव–
4a. B. –वैद्यनिखिल–  4b. B. पुष्पु–, P. प्रक्षाल्य
4d. B. भनोभुंजीत, भूमीपतिम्  P. भूमीपति
5a. BP. रागोज्वल  5c. B. –लोकचेष्टित–  5d. BP. सहित

आदाय प्रणतिं क्रमेण निखिलैर्भृत्यैरमात्यैः कृतां
नानाचित्रविचित्ररत्नविलसत्सिंहासने राजते ।
चञ्चच्चामरवीजितः परिवृतः पार्श्वद्वये खड्गिभिः
शृण्वन् बन्दिजयध्वनिं नृपवरो रम्यातपत्रान्वितः ॥ ६ ॥

कश्चिन्मस्तकधूननेन तदनु भ्रूभङ्गमात्रेण च
स्मेरापाङ्गतरङ्गितेन मधुरालापप्रचारेण च ।
सम्भाव्य त्वरितं सभातलगतं लोकं समस्तं यथा-
योग्यं भाग्यनिधिश्वरोक्तवचनान्याकर्ण्य कार्यं चरेत् ॥ ७ ॥

घण्टाघर्घरघोरघोषमधुपव्यालोलगण्डस्थलान्
एकद्वित्रिचतुर्मदोन्मदगजानानीय संसत्पुरः ।
उद्दामाङ्कुशहस्तदत्तपटयोर्यत्नेन संयुक्तयो-
र्दन्तादन्ति तयोर्द्वयोरपि महायुद्धं क्षणं पश्यति ॥ ८ ॥

आनी[71ᵃ]तास्तदनु स्फुरन्मणिमयैः पृष्ठासनैर्भूषिता
भास्वत्काञ्चनशृङ्खलानियमितग्रीवाश्चलन्नासिकाः ।
उत्कर्णाश्चलकेसरा लघुलघुक्षिप्ताङ्घ्रिसंशोभिता
वारंवारमधोमुखं कृतवतो हेषां शिरोधूननम् ॥ ९ ॥

शत्रूणामधिकं बलं क्षितिभुजामालोक्य नानाविधं
सैन्यं भूरि विधाय भासुरभटं योद्धुं समागच्छताम् ।
सार्धं तैः सहसा महोत्तमचरद्वारेण भूनायकः
कृत्वा मन्त्रमनेकनीतिनिपुणः सन्धिं करोति ध्रुवम् ॥ १० ॥

सन्धिं नैव कदापि यः प्रकुरुते योद्धुं समागच्छति
प्रौढाऽहङ्कृतिमान् महोग्रबलवान् द्वेष्टाऽतिदुष्टो नृपः ।

---

$6^{d}$. B. –जयध्वनि
$7^{a}$. P. धूननेनदनु   $7^{b}$. B. तरंगतेन   $7^{d}$. BP. -निधिश्वरो-
$8^{c}$. B. हस्तदस्तपटयो   $9^{a}$. BP. पृष्ठा-   $9^{b}$. B. –नियमितः
$10^{b}$. B. –गंछताम्   $10^{c}$. P. सार्द्ध   $11^{a}$. BP. -गछति
$11^{b}$. P. प्रौठा–

दत्वा चारुहयान्नवोत्तमगजान् किञ्चिद्धनं वा पुनः
शीघ्रं तेन समं विचारचतुरः प्रीतिं प्रकुर्यात् पुनः ॥ ११ ॥

सर्वांशेन महानतीव बलवान् नो सामदानैरपि
प्रीतिं किञ्चिदुपैति केऽलमसौ राट्प्रहे राजते ।

तं शत्रुं प्रतिगूढमन्त्रनिपुणः कुर्यान्मनीषी नृपः
स्वच्छन्दं विविभेद्यमेव सहसा सर्वैः प्रकारैरपि ॥ १२ ॥

भूरिद्रव्यभरोत्कटाश्वगजभूदानैर्धराधीश्वरः
शत्रूणां कटकस्थवीरनिवहे भेदं प्रकुर्यान्मुहुः ।

किं चान्यैः कपटैः सहस्ररचनासाध्यैरनेकैरपि
क्षोणी[$71^b$] मण्डलपालनाय नितरां ध्वंसाय नित्यं द्विषाम् ॥ १३ ॥

रात्रावेव तदीयनिद्रितबलाऽभ्यन्तः प्रविश्य क्षणात्
क्षिप्त्वा शस्त्रसमुच्चयं किल रिपोः सैन्यं द्रुतं नाशयेत् ।

अत्युग्रौषधिचूर्णपूर्णविविधप्रोद्दामयन्त्रोदरे
निक्षिप्य ज्वलनं सपत्नकटकं चौरो भटः सन्दहेत् ॥ १४ ॥

इत्थं मत्तगजेन्द्रवाजिनिधनैः सैन्यस्य दाहैरपि
ग्रामाग्रामपि लुण्टनेन परितो भाण्डारचौर्यैरपि ।

प्रत्यर्थी वशतामुपेत्य कुरुते चाटूक्तिमुच्चैस्तरां
यत्नीतं मम देहि वैरमधुना मास्त्वावयोर्मित्रता ॥ १५ ॥

साम्ना नैव कदापि यस्य मनसि प्रीतिः समुत्पद्यते
नो वा चारुतुरङ्गमत्तकरिणां वित्तस्य दानैरपि ।

नैवानेकविधानभेदकरणैः सामोन्मना यो रिपुः
कुर्यात् तं प्रति सत्वरं क्षितिपतिर्दण्डं हठान्मन्त्रवित् ॥ १६ ॥

$11^c$. BP. किंचिद्धनम्  $12^b$. B. सजते  $12^d$. B. स्वच्छन्दम्
$13^c$. B. किंवान्यैः  $13^d$. P. क्षौणी  $14^a$. B. रात्रावेवा, P. तदीय–
$14^b$. B. रपोः  $15^d$. B. अधुमा, मास्वावयोर्
$16^b$. B. नैवा  $16^c$. B. –मेदकिरणैः, शामोम्मना, योः
$16^d$. B. कुर्यात्वम्, मंत्रिवत्

उद्दामोन्मदवारणव्यतिकरव्यालोलघण्टारवां
चञ्चत्क्षीरपयोधिवीचिविशदव्यावल्गदश्वावलीम् ।
नानाचित्रचलत्पटोत्कररथव्यूहां गृहीत्वा चमूं
पादातैर्बहुभिर्वृतां नरपतिर्दण्डाय शत्रोर्व्रजेत् ॥ १७ ॥

मातङ्गाश्वरथौघपत्तिनिकरस्थूलास्यवैश्वानराऽ-
स्त्रौघं शाणितसर्वशस्त्रविपुलं सैन्यं गृहीत्वा द्रुतम् ।
[72[a]]युद्धं यस्तुमुलं करोति युगपत् क्षिप्त्वा समस्तायुधं
स्वच्छन्दं विजयी स एव भवति क्षोणीपतीनां वरः ॥ १८ ॥

दृष्ट्वा प्रत्यर्थिरन्ध्रं त्वरितमवनिपः साधयेत् स्वीयकार्यं
शत्रूत्कर्षासहिष्णुः सततमलसतां सन्त्यजेदेव दूरे ।
पाता यत्नात् प्रजानां क*पटशतमयो निग्रहे शात्रवाणां
नित्यं धर्मस्य कर्ता स्वपरजन*पदं चारनेत्रेण पश्येत् ॥ १९ ॥

दुर्लङ्घ्या यस्य दुर्गाः स्फुरदुरुकरिणश्चारुचञ्चत्तुरङ्गाः
कोशाः सम्पूर्णवित्ता रथसुभटतनुत्राणवह्न्यस्त्रवृन्दम् ।
धर्मे बुद्धिर्नियोगी विविधबुधजना मन्त्रिणो गूढमन्त्राः
क्षोणीशक्तिः समग्रा स किल नरपतिर्दुर्जयः स्यादरीणाम् ॥ २० ॥

यद्देशे बहुपातकं समभवद् दुर्भिक्षमुच्चैस्तरां
किञ्चाऽन्यच्चिरकालशुष्कविटपी सूते न बीजाङ्कुरम् ।
उल्कायाः पतनं निशाश्वरुदितं रात्रौ मुहुर्गोरिव
पाषाणप्रतिमाश्रु सोऽन्यनृपतेः साध्यः प्रयासं विना ॥ २१ ॥

---

17[d]. B. पादानैः
18[b]. B. गृहीत्वाद्भुतम् 18[d]. B. स्वंछंदम्; B. स एवं, P. सं एव
19[a]. B. -रंध्रम् 19[cd] *Portion between asterisks which is missing in P. is supplied therein in the margin by other hand.
20[a]. B. स्फुरदुरु-, P. -चंचत्-, 20[c]. P. धर्मो 21[a]. B. समभवत्
21[b]. B. बीनांकुरम् 21[c]. B. निशाश्व, P. गौरवः

भक्तं द्वेष्टि पुरातनं भृशमहो, नव्यं जनं काङ्क्षति
प्रामाण्यं तनुते न चाप्तवचने, क्रोधं विना कारणम् ।
युक्तो बुद्धिविपर्ययेण, कुरुते नित्यं कुपथ्यं, त्यजे-
देवम्भूतनृपं सुबुद्धिसचिवो, वैद्यो यथा व्याधितम् ॥ २२ ॥

दृष्ट्वा दन्ता[72b]-वलानामसिफलकवतां चेष्टितं घोटकानां
मल्लानां, बन्दिगीतो विशति परिजनैः सार्धमन्तर्गृहाणां ।
कृत्वा स्नानं प्रसूनप्रकरपरिमलोद्गारिगङ्गोदकेन
व्यादत्ते चीनचोलं ललितमणिलसत्पादुकालङ्कृताङ्घ्रिः ॥ २३ ॥

सौवर्णस्थापनीयोपरिकनकमये भाजने वाटिकाभिः
प्रोद्दीप्तप्रान्तभागे रजतविरचितं काञ्चनीयं च पात्रम् ।
तस्याधः पार्श्वदेशे स्फुटकुसु*मसमं शाल्यमन्नं सबाष्पं
साऽऽज्यं शाकैरनेकैर्विविधरसयुतं चारु भुङ्क्ते नरेन्द्रः ॥ २४ ॥

अन्तःप्रेमरसालसेन्दुवदनाहस्तारविन्दाऽर्पितं
वारंवारमनेकयुक्तिरचनासम्भारसम्भावितम् ।
लीलान्दोलितबाहुकङ्कणझणत्काराढ्यकान्ताकर-
व्यालोलव्यजनेन वीजितवपुर्वैद्यस्य भुङ्क्ते पुरः ॥ २५ ॥

पक्वान्नादिकपूर्णभोजनभवोद्गारी पिपासान्वितः
कर्पूरातिसुवासितं च सलिलं पीत्वा वितृष्णो नृपः ।
गण्डूषोदकमिन्दुनिन्दकमुखे क्षिप्त्वा स्फुरद्राजते
पात्रे काञ्चनकन्धरे घनरसैः प्रक्षालयेदाननम् ॥ २६ ॥

---

22[a]. B. भक्त, कांक्ष्यति
22[b]. B. चाप्तववने, P. वाप्त-          22[d]. BP. वैद्या
23[d]. B. वीनचोलम्          24[a]. B. –क्नकमए, वाजने,
24[b]. P. –प्रीतभागे,          24[c]. B. स्फुटसुम–
*A. folio 76 begins from here.
25[a]. BP. –अरविंदर्पितम्          25[c]. B. –झणत्काराय– P –जणत्काराढ्य–
25[d]. B. भुक्ते परः          26[a]. P. –पूर्णभोजन–
26[b]. B. पिपृष्णो, AP. –तितृप्तो          26[d]. B. कांचनकांधरा, AP. –कंधरा

कस्तूरीचन्दनादिप्रचुरपरिमलं चारुचूर्णप्रचारं
प्रोद्यत्पूगीफलाढ्यं सुललितखदिरं नागवल्लीदलाप्तम् ।
ताम्बूलं तद् गृहीत्वा सपदि परिजनेनाऽऽदरेण प्र[73a]-दत्तं
शय्यागारं विशालं प्रविशति ललनालोचनैः पीयमानः ॥ २७ ॥

काचित्कान्ता गृहीत्वा सुललितकुसुमं कापि पानीयपात्रं
काचित्ताम्बूलबीटीं कनकमणिमयालङ्कृतिं कापि पाणौ ।
काचित्पाटीरपङ्कं मृगमदमथितं गन्धचूर्णं च काचित्
काचिच्चीनं निचोलं स किल नरपतिर्भाति यस्याग्रदेशे ॥ २८ ॥

धत्ते काचित् कराभ्यां सरसिजनयना लोललीलारविन्दं
काचित्कोदण्डखण्डं शरयुगसहितं कामिनी कापि खड्गम् ।
काचिन्माध्वीकपात्रं शुकमपि चतुरं कापि चञ्चच्चकोरीं
काचिच्चाम्पेयगौरी मदभरमुदिता दर्पणं कापि राज्ञः ॥ २९ ॥

काचिल्लास्यं तनोति स्फुरदखिलकलारङ्गदेशेऽङ्गहारै-
रालापे कापि मुग्धा सरिगमपधनीव्युत्क्रमस्य प्रचारम् ।
काचिल्लोलाङ्गुलीभिः सरसिजनयना वंशरन्ध्रेषु रागं
काचिद्गानं समानं परभृतमधुरा मन्द्रमुख्यक्रमेण ॥ ३० ॥

काचित्तालद्वयेन क्वणकलवलया कल्पचित्रादिसञ्चां-
ल्लोलद्वामाङ्गुलीभिर्मुरजमुखपुटे कर्तरीं काचिदुच्चैः ।
शिक्षार्थं कापि धत्ते किल शयकमले हेमदण्डस्य खण्डं
वक्त्राब्जे काऽप्युपाङ्गं मृदुकरनलिने दीपिकां काचिदु[73b]-च्चैः ॥ ३१ ॥

चञ्चच्चीरचमत्कृतिस्फुरदतिस्निग्धाङ्गरागद्युतिः
प्रोद्यद्धूपसुगन्धधोरणिरणन्मञ्जीरमङ्घ्रिद्वये ।

---

27d. B. शय्यागारं विशति प्रविशति 28a. P. -कुसमम् 28b. B. -बीटी
29c. B. चतुरीम्, कापी चंचच्चकोरी
30a. B. -देशोंगहारे 30c. B. -अङ्गुलिभिः, -रंध्रेषु
31a. B. -संचा-
32a. B. -चीरच्चमत्कृति- 32ab. A.P. -द्युतिप्रोद्यद्- 32b. A. प्रोद्यद्धूप-

भास्वत्स्वर्णविभूषणव्यतिकरस्फूर्जत्प्रभामण्डलं
नाट्यार्थं नितरां नटी प्रविशति प्रोद्दीप्तरङ्गस्थले ॥ ३२ ॥

आदावेव विधाय सौष्ठववपुः पाटप्रचारैः समं
सव्याङ्घ्रिं पुरतः क्षिपेद् द्रुततरं वारद्वयं भूतले ।
पश्चाद्वामभुजः प्रसारिततरस्तिर्यक् पुनः सम्मुखः
स्याज्जानुभ्रमिराशुमण्डलमिति प्रेम्णा नटी नृत्यति ॥ ३३ ॥

शोभां तत्र तनोति नाट्यमखिलं यन्मण्डपे स्यात् प्रति-
ध्वानः, किं च सुधामयी वसुमती, वृन्दं मनोरञ्जकम् ।
पात्रं यत्र गुणान्वितं, क्षितिपतिर्नित्यं प्रसन्नाननः
सूरिर्भूरिमतिः प्रबन्धघटने, संसच्चमत्कारिणी ॥ ३४ ॥

मातङ्गाः सुभटा हयाः सुनयना दास्यः कुमारा बुधा
ज्योतिर्विद्भिषजो नियोगिनिकरो लेखार्थमुद्रावनम् ।
सङ्गीतप्रहतोच्चपुष्कररवश्छत्रं चलच्चामरं
राजद्वारि विभूषणानि शिबिका स्थूलप्रदीपावली ॥ ३५ ॥

शत्रुः शत्रोश्च मित्रं परपुरुषवधूसङ्गमासक्तचेता
भ्रष्टः स्वाचारमार्गाद्भवति मदिरयाऽत्यन्तमत्तो जनो यः ।
उन्मादी द्यूतकारः कपटशतमयः स्त्रीजनो भूमिपालो
भग्नस्नेहः सगोत्रो, न हि [74ᵃ]नृपतिवरो विश्वसेच्छ्वभ्रदेतान् ॥ ३६ ॥

सोपानं स्फुटचन्द्रकान्तघटितं, प्रोद्यत्प्रवालोपलै-
र्बद्धं भित्तिचतुष्टयं, मरकतैः स्तम्भावली निर्मिता ।
ऊर्ध्वं यस्य सुवर्णरत्नखचितं चन्द्रातपेनोज्ज्वलं
मध्यं धूपसुवासितं नरपतेस्तद्भाति निद्रागृहम् ॥ ३७ ॥

---

$32^{c}$. B. -स्फूर्जत्- $33^{a}$. ABP. सौष्टव-, B. प्रवारैः, A. प्रचारैः सहा-
$33^{c}$. P. संमुख- $33^{d}$. B. आशुमंडनम् $34^{b}$. P. सुधामया
$34^{c}$. P. प्रसंन्ना- $35^{b}$. B. नियोग- $35^{c}$. AB. -रवः, P. -रव-
$35^{d}$. B. राजद्वार- P. शबिका $36^{b}$. B. मार्गेद्भवति, AP. मदिरात्यंत-
$36^{c}$. A. -शतमय- $36^{d}$. B. भग्नः, B. सुमति- P. सुगति- B. विश्वसेच्छ-
$37^{b}$. B. निर्मिता। $37^{c}$. BP. -नोज्वलम् $37^{d}$. ABP. स्तद्भाति

प्रौढा काचन कामिनी क्षितिपतेस्तल्पोपविष्टा सती
चञ्चत्कङ्कणझिंकृतिर्वितनुते पादाब्जसंवाहनम् ।
व्यावल्गद्वलयावलिध्वनिभरं काचिच्चलच्चामरं
कुन्देन्दुप्रतिमं प्रतप्तकनकैर्बद्धं धुनीते मुहुः ॥ ३८ ॥
मल्ली-माधविका-लवङ्गलतिका-जातीलता-केतकी-
चम्पा-चन्दन-चूतचारु नृपतेरुद्यानमुज्जृम्भते ।
जम्बू-निम्ब-कदम्ब-साल-सरल-न्यग्रोध-पूगीच्छद-
छायाच्छन्नपतत्प्रभाकरकरप्रौढप्रतापोदयम् ॥ ३९ ॥
द्राक्षा-दाडिम-नागरङ्ग-लवली-जम्बीर-धात्रीद्रुम-
व्यालोलाऽभिनवैर्दलैः किसलयैः शाखाभिराच्छादितम् ।
नानारूपलतानिकुञ्जभवनैर्वृक्षाऽऽलवालादिभिः ।
सम्पूर्णोदकसारिणीभिरधिकं वृन्दावनं राजते ॥ ४० ॥
अत्यन्तोज्ज्वलनारिकेलकदलीपत्रावलीमञ्जुलं
क्रीडाकाननमद्भुतं नरपतेरैन्द्रं यथा नन्दनम् ।
तन्मध्ये गृहदीर्घिका सुललिता तत्रैव हंसावली
[74b]वातान्दोलितवीचिलोलनलिनीपत्रान्तरे क्रीडति ॥ ४१ ॥
रिङ्गत्तुङ्गतरङ्गसङ्गतरलैरुद्धूतधूलीभरैः
कल्हारैः कुमुदैः सितैः सरसिजैर्नीलोत्पलैश्चित्रिता ।
हंसैः पद्ममृणालभक्षणमदोन्मत्तैः कलक्वाणितै-
रत्यन्तं मुखरा विभाति नृपतेः क्रीडावने दीर्घिका ॥ ४२ ॥

---

38a. B. कांचन, तुल्योपविष्टा 38b. B. पाटाब्ज– 38c. ABP. व्यालोलद्–
38d. P. मुहु
39b. AP. उजृंभते 39c. ABP. –शाल– 39cd ABP. पूगीछ्दछायाछन्न–
40a. B. –जंब्भीर– 40b. ABP. किशलयैः P. शाषाभिः ABP. आछादितम्
40d. A. –सारणीभिः
41a. ABP. –उज्वल–, B. –नालिकेर–
41b. B. कानन मंजुलम् P. –मृद्भुतम्, B. इंद्रम्, AP. –रैंद्रम्
41c. B. –दीर्घीका
42a. A. उधूत– 42c. B. –मद्दोन्मतैः, कलक्कीणितैः

**श्रीकण्ठ**नाम्ना रचिता नरेन्द्रयोग्या रसाला **रसकौमुदी**यम् ।
नव्यार्थभव्या रसिकेन सेव्या काव्यानुसन्धानविधानधन्या ॥ ४३ ॥

अत्यन्तोत्तुङ्गपीनस्तनकनकघटे वीक्ष्य कुञ्जे* मुरारिः*
कस्तूरीचारुनीरैर्विरचितमकरीं मञ्जुलां चन्द्रमुख्याः ।
यस्मातुं कण्ठ*-पीठे व्यधितविधुमणिव्रातमालाममुष्या*
राधां प्रत्यस्य हास्यं हिमकरकिरणप्रोज्ज्वलं पातु भक्तान् ॥ ४४ ॥

भीमां क्रूरकरिक्रमैरतितरां रिङ्गत्तुरङ्गोत्करां
चञ्चच्चारुरथां मदोत्कटभटां सेनां विधाय द्रुतम् ।
हत्वा यः परिपन्थिपुञ्जमकरोच्छ्रीद्**वारकां** निष्करां
*सत्कीर्तेः *किल ' **शत्रुशल्यनृपतेः** पारो न पुण्याम्बुधेः ॥४५॥

सम्यक् शास्त्रपरम्परा-*प्रतिपद-न्या*सक्रियाप्रोल्लस-
द्विद्यापात्रविनोदरङ्गरसिकः **श्रीशत्रुशल्यो नृपः** ।
तत्तत्कामकलाकलापकुशलः सङ्गीतसाहित्ययो-
र्दक्षस्ताण्डवडम्ब[75a]-रप्रमुदितो **जामश्चिरं** जीवतु ॥ ४६ ॥

अस्तीयं **रसकौमुदी** रसविदां सन्तोषसम्पादिनी
रे धीरा धरणीतलेऽति विपुले यत्रापि कुत्रापि च ।
*आस्ते *क्षोणिपतिः सुरद्रुमसमो दाता रसग्राहक-
स्तत्रैनां पठतो *जनस्य सुलभा गाङ्गेय-*सिद्धिः करे ॥ ४७ ॥

---

43c. B. नव्यार्घ-, काव्यासुसंधान-
44a. B. अस्यांभोत्तुंग-, 44b. B. मञ्जुलम्, -मुख्या
44c. B. यात्रातुम, कण्ठमीक्ष्ये 44d. A. प्रात्तस्य
45b. B. चंचत्वासस्थाम् AP. -रथामदो-, B. ध्रुवम्
45c. AP. अकरोछ्री-, B. निष्करम्
44ac, 45d, 46a, 47cd, Portion between asterisks is torn in B., supplied from P.
45d. B. सक्ष-किल- B. पुण्याम्बुधेः
46a. B. -परम्पराप्रविसक्रिया- 46c. B. तत्तः
47a. B. शस्तीय--कौमुदी 47b. B. कत्रापिनः 47c. B. क्षोणितलिः

कृष्णार्पणं मे रसकौमुदीयं विचित्रपद्यावलिचित्रिताऽस्तु ।
कवीश्वराणां किल कण्ठपीठे मग्ना सती तिष्ठतु सा यथेष्टम् ॥ ४८ ॥

इति श्रीमन्नाट्यशास्त्रे श्रीकण्ठकविविरचितायां रसकौमुद्यामुत्तरखण्डे राजनीतिवर्णनाध्यायो दशमः ॥१०॥

[ ॥ इति रसकौमुदी समाप्ता ॥ ]

॥ श्रीरस्तु ॥

॥ कल्याणमस्तु ॥

48d. ABP. तिष्ठनु

## APPENDIX

Authorities and persons referred to in the RK :—

( A ) Referred to by names :—

अर्जुनः I. 11 ; —अर्जुन-IV.3.
कल्लिनाथ( -मतम् ) II.105.
कश्यपः I.11.
कोहलः I.11
जामः X.46
( श्री- ) तण्डुना V.4
दन्तिलः I.62
नन्दिकेश्वर( -भाषितः ) IV.26
-नारदाः I.11
पुण्डरीक( -आदयः ) IV.80
पूर्णानन्दकवेः I.10
भरतः I.11
भरत ( -मुनि-मुख्यैः ) V.14
भरत ( -आदयः ) I.54, IV.5
„ ( -आदिभिः ) I.15, 16 ; III.62 ; IV.148
„ ( -आदिभिः आचार्यैः ) V.211
„ ( „ मुनिभिः ) II.210 ; III.80 ; IV.104 ; V.133
„ ( -आद्यैः ) III.46, 69 ; V.104
„ ( आद्यैः सूरिभिः ) V.74
„ ( -उद्दिष्टः ) V.18
भरताय V.3, 4.
भरतेन V.25
भारतीय ( -मतम ) V.195
( श्रीमन्- ) मङ्गलपुत्रेण VI.5
मतङ्गः I.11
मतङ्ग ( -आदयः ) IV.36
„ ( -आदि-मुनीश्वरैः ) I.68 ; IV.107
„ ( -आदिभिराचार्यैः ) I.76 ; V.122
„ ( -आदि मत ) III.85, 143
„ ( „ शास्त्र ) IV.3
„ ( -आद्यैः ) I.64
„ ( मुनि-सम्मतम् ) IV.185
मया ( = श्रीकण्ठेन ) I.13, 90 ; II.6, 52, 83 ; V.49 etc. etc.
रम्भा- I.11 ; IV.3
रसकौमुदी ( present work ) I.6, 22 ; X.43, 47, 48
रुद्रनन्दनः I.12
( श्री- ) रूपदेवस्य ( गुरोः ) I.10
लक्ष्मीश- I.11
लोकेश- I.11
विठ्ठलदेवस्य ( प्रसादात ) IV.96
विश्वावसुः I.12
वायुः I.12
वायुनन्दनः ( = हनूमान् ) I.12
शक्ति- I.11
शङ्कर- I.11
( जामश्री- ) शत्रुशल्यः I.5
शत्रुशल्यो ( नृपः ) X.46
शत्रुशल्य-( नृपतेः ) X.45
श्रीकण्ठ ( -नामा कविः ) I.4
श्रीकण्ठः V.341
श्रीकण्ठेन III.89 ; IV.19, 52, 96

( B ) Referred to in general :—

अन्ये I.42 ; IV.69 ; V.163
अन्ये ( आचार्याः ) I.12
अन्यैः ( बुधैः ) II.107
अपरे I.42, 53 ; III.100
आचार्य ( -सम्मतौ ) V.106
आचार्याः III.145
आचार्यैः ( मतङ्गादिभिः ) I.76
( श्री- )कर्णाटकभूषणाः IV.77
कश्चित् V.164, 165
कालज्ञैः ( पूर्वसूरिभिः ) IV.101
केचित् I.42 ; III.80 ; V.163 ; VII.5
केषां ( मते ) II.141
कोऽपि पण्डितः III.42
कैः II.107
गानतत्परैः III.106
गायकभेदज्ञैः II.199
गायकोत्तमैः II.110

# INDEX OF TECHNICAL TERMS

## ERRATA

**( Introduction )**

| *Page* | *Line* | *Incorrect* | *Correct* |
|---|---|---|---|
| 1 | 13 | eastern | western |
| | n. 2, l. 2 | collaborated | corroborated |
| 2 | 6 | Śirkaṇṭha | Śrīkaṇṭha |
| | 21 | Gitāgovinda | Gītagovinda |
| 3 | 4 | Śrīrūpadevsya | Śrīrūpadevasya |
| 5 | 6 | my | his |
| 6 | 3 | ( 1559-1608 A.D. ) | ( 1569-1608 A.D. ) |
| | 4 | 1569 A.D. | 1596 A.D. |
| 8 | 11 | classfying | classifying |
| 11 | 11 | mūrchhanās | mūrchanās |
| | 25 | Bhārati- | Bhāratī- |
| | n. 3. l. 2 | Padmanabhan | Anantapadma.. |
| 13 | 6 | chhandovatī | Chandovatī |
| 14 | 11 | ,, | ,, |
| | 12 | Dayavatī | Dayāvatī |
| | 19 | Prīṭi | Prīti |
| | 20 | Marjanī | Mārjanī |
| 15 | 7 | each others | each other. |
| | 11 | Mūrchhanās | Mūrchanās.* |
| 16 | 4, 7, 8 | ,, | ,, |
| | 9 | √Mūrchh | √Mūrch |
| 17 | 8 | Ṣādava | Ṣāḍava |
| | 15 | Uddīṣṭa | Uddiṣṭa |
| 18 | n. 15, l. 2 | अनन्तरवास्त | अनन्तत्वात्तु |
| 22 | n. 20, l. 2 | 16tn | 16th |
| 24 | n. , l. 3 | साधरण | साधारण. |
| 25 | l. 6 | -तमा | -तमौ |
| 26 | col. 3, ( facing बहुली ) | षाडवा | औडवा |
| 27 | col. 7, l. 2 | इदं कलि... etc. should face म म म of col. 5. | |
| 31 | 12 | Ardhārdhapāṇī | Ardhārdhapāṇi |
| | 13 | Ardhapāṇī | Ardhapāṇi. |
| 49 | 24 | Ramāmātya | Rāmāmātya. |

* The spelling of this word should be corrected elsewhere also.

In the Sanskrit text minor corrections of dashes, and bold letters as also of ड़ etc. are ignored to save the list from inflation.

| *Page* | *Line* | *Incorrect* | *Correct* |
| --- | --- | --- | --- |
| 59 | n.46 | Viņā | Vīṇā |
| 61 | 14 (col.4) | Ṣādavā | Ṣāḍavā |
| 62 | 11 (col.4) | Oḍava | Oḍavā |
| 66 | 4 (col.2) | Purṇā | Pūrṇā |
| 67 | 7 ( " ) | murchanā | mūrchanā |
| 68 | 4 (col.1) | Ghaṇtā - | Ghaṇṭā - |
| 69 | 4 (col. 3) | Vasant | Vasanta |
| 70 | 3 ( " ) | - gauda | - gauḍa |
| 71 | 4 (col.2) | Pūrṅa | Pūrṇa |
| | 16 (col.3) | - kāmodī | - kāmodī |
| 72 | 3 (col.4) | Sa | Sā |
| | 12 (col.3) | Sā | √ |
| 76 | 3 | Suddha - | Śuddha |
| | 11 | *alaṅkaras* | alaṅkāras |
| | 25 | *Olā* | *olā* |
| 86 | 6 | Śāstri | Śāstrī |
| | 11 | Reprinted | Reprinted, |
| | 28 | Damodara | Dāmodara |
| | 88 | | |

## ERRATA

(Text)

| *Page* | *Stanza* | *Incorrect* | *Correct* |
| --- | --- | --- | --- |
| 4 | $27^{cd}$ | स्याच्चाधिष्ठान | स्यात्स्वाधि- |
| 5 | $33^{b}$ | षडूज- | षड्ज- |
| | $35^{ab}$ | स्यातत्र | स्यात्तत्र |
| | $38^{a}$ | समुप्तत्ति- | समुत्पत्ति- |
| 6 | $43^{c}$ | रञ्जिनी | रञ्जनी |
| 7 | $50^{cd}$ | - चार्यैः कृत- | - चार्यैश्च्युत- |
| 8 | n. $64^{a}$ | आरोहे | N. आरोहे |
| 9 | $70^{c}$ | काकल्य- | [ $5^{b}$ ]काकल्य- |
| 10 | n. $78^{b}$ | प्रश्नोऽथांके | B. प्रश्नोऽथांके |
| | n. $81^{b}$ | संमहः | B. संग्रहः |
| 11 | n. $85^{a}$ | being here. | begins from here. |
| | ,, $89^{c}$ | शिरास्वार | B. शिरास्वार. |
| | ,, $90^{b}$ | कल्पन्ते | B. कल्पन्ते. |

| *Page* | *Stanza* | *Incorrect* | *Correct* |
|---|---|---|---|
| 12 | colophon | श्रीकण्ठ- | श्रीकृण्ठ- |
| 13 | $4^{d}$ | योगरूड: | योगरूढ:. |
| 14 | $10^{b}$ | प्रकीर्तित: | प्रकीर्तित: |
| | $12^{a}$ | -वुर्ययो: | - तुर्ययो:. |
| | n. $10^{c}$ | दैर्ध्ये | B. दैर्ध्ये. |
| | n. $13^{d}$ | - रंध्र - | B. रंध्र -. |
| | n. $18^{a}$ | दाढ्यर्थं | B. दाढ्यार्थं |
| 15 | $20^{d}$ | कालयुगे | कीलयुगे. |
| | n. $20^{d}$ | B. देवौ | B. देवौ काल - |
| 16 | $31^{b}$ | साबथातथा | स्याद्यथा तथा. |
| 17 | n. $43^{c}$ | पतय: | B. पतय: |
| 18 | $52^{d}$ | तन्त्री चतु - | तन्त्रीचतु - |
| | n. $52^{b}$ | $52^{b}$ | $52^{d}$ |
| | n. $52^{b}$ | - तन्त्रा - | B. - तन्त्रा - |
| | n. $55^{d}$ | मध्यमोले - | B. मध्य - |
| 19 | n. $58^{b}$ | श्रुक | B. श्रुक. |
| | n. $59^{b}$ | कुहुरो - | B. कुहुरो - |
| 20 | $66^{c}$ | सारणयातन्त्री - | सारणया तन्त्री - |
| 21 | $71^{d}$ | अर्धकर्वरी | अर्धकर्तरीम्. |
| 21 | n. $71^{d}$ | supply :— | $71^{d}$ B. अर्धकर्तरी |
| 22 | n. 1 | folio 11 | १ folio 11. |
| 24 | $92^{d}$ | तन्त्रीन्मुखान् (?) | तन्त्रीमुखात्. |
| | $95^{b}$ | - थवाऽनबा | - थवाऽनिगा (?). |
| | $95^{c}$ | प्रमेया | प्रगेया. |
| | n. $97^{d}$ | कतिचिद् | B. कतिचिद्. |
| 26 | n. $107^{c}$ | $107^{c}$ | $107^{e}$ |
| 27 | $119^{c}$ | - चर्चा विलसत् - | - चर्चाविलसत् - |
| | $115^{e}$ | $115^{e}$ | $115^{c}$ |
| 28 | $125^{c}$ | कैशकी | कैशिकी |
| | n. $122^{d}$ | $122^{d}$ | $122^{cf}$ |
| | $123^{c}$ | गमकौ - | B. गमकौ - |
| | $127^{b}$ | रिधौज्झित: | B. रिधौझित: |
| 29 | after $130^{d}$ | बङ्गाल: ॥ ] | शुद्धबङ्गाल: ॥ ] |
| | $133^{a}$ | तोडी | [ $14^{a}$ ] तोडी |
| | $133^{c}$ | मन्या हतापकम्पा | मन्याहता पकम्पा |
| 31 | n. $142^{b}$ | स्फुरत् | स्फुंरत् |
| 34 | before $163^{a}$ | प्रथमोऽध्याय: | द्वितीयोऽ - |
| 35 | $174^{a}$ | वसन्तसमये | वसन्त °समये. |
| 36 | $181^{a}$ | [illegible] - | [illegible] - |

| *Page* | *Stanza* | *Incorrect* | *Correct* |
| --- | --- | --- | --- |
| 36 | n. 184$^{f}$ | 184$^{f}$ | 184$^{e}$ |
| 37 | 189$^{c}$ | - ध्वाना प्र - | ध्वाना: प्र - |
| | 190$^{a}$ | चक्राप्ताणि - | चक्रात्पाणि - |
| 38 | 196$^{c}$ | क्रियादोषात् | क्रियादोषात् ( विना दोषान् ) |
| | 196$^{d}$ | क्रियापरि: | क्रियापर: |
| 40 | n. 218$^{d}$ | कम्पि - | B. कम्पि - |
| 41 | n. 219$^{a}$ & 219$^{b}$ | | to be read on p. 40. |
| 43 | 27$^{d}$ | - तोऽरुक् - | - तो रुक् - |
| | 30-37 | vide p. 34 ( Introduction ) | |
| 44 | 40$^{d}$ | - इधामत: | - इधा मत: |
| 48 | n. 87 | 87 | 87$^{c}$ |
| 49 | n. 88 | 88 | 88$^{a}$ |
| | n. 89 | 89 | 89$^{c}$ |
| | n. 95 | 95 | 95$^{c}$ |
| 51 | n. 109$^{c}$ | - द्रवौ | B. - द्रवौ |
| | n. 111$^{ef}$ | म्रत्पानतु - | B. म्रत्पानतु - |
| 61 | n. 36$^{d}$, l. 3. | दातीरि - | दातरि - |
| 64 | 55$^{b}$ | अङ्गुल्याग्रे - | अङ्गुल्यग्रे - |
| | n. 1 | | to be read on p. 63. |
| 65 | 65$^{d}$ | वर्णसरा | वर्णस्व( ? )रा - |
| | 58$^{d}$ | 58$^{d}$ | 58$^{c}$ |
| 66 | 69$^{a}$ | कोमलतावाद्यो | कोमलनादाद्यो( ? ) |
| 69 | n. l. 2 | supply :—95 Written in top margin by the same hand. | |
| 70 | 103$^{b}$ | वार्तिको | वार्तिके( ? ) |
| 71 | 111$^{b}$ | देवजीवा - | देवीजीवा - |
| | n. 120 | 120 | 120$^{a-d}$ |
| 72 | 123$^{a}$ | चत्वारि | चत्वारो( ? ) |
| 72-73 | 128-135$^{a}$ | | vide Intro. p. 41. |
| 75 | After 150 | इति झम्पा | इति झम्प: |
| 78 | 158$^{a}$ | [ 35 ] | [ 35$^{a}$ ] |
| 83 | n. 3$^{d}$ | गुण:, | गुणै: |
| 84 | n. 8$^{b}$ | भवेद् - | B. भवेद् - |
| 86 | n. 19$^{b}$ | किर्मीरि - | B. किर्मीरि |
| 91 | n. 46$^{c}$ | तदेव | B. तदेव |
| 92 | n. 50$^{ab}$ | त्रिपताक - | B. त्रिप्रताक - |
| 100 | 115$^{c}$ | अलपल्लवकाराला | अरालपल्लवकरा - ( ? ) |
| 101 | After 118$^{ab}$ | | Supply :—[ ॥ इत्यलपद्मौ ॥ ] |
| 115 | l. 1 | पञ्चमोऽध्याय: | रसकौमुदी |

| *Page* | *Stanza* | *Incorrect* | *Correct* |
|---|---|---|---|
| 106 | l. 1 | रसकौमुदी | पञ्चमोऽध्यायः |
| | $165^{ab}$ | पुष्पैः विं - | पुष्पैर्वि - |
| 110 | $196^{c}$ | एकदुक्तं | एतदुक्तं |
| 113 | n. $214^{a}$ | अलातं | B. अलातं |
| | n. $216^{c}$ | रेचिता | P. रेचिता |
| 119 | n. $261^{c}$ | चेछिरो | B. चेछिरो |
| 123 | n. $294^{d}$ | उरू | B. उरू |
| 131 | $348^{d}$ | कठि | कटि |
| | n. $346^{d}$ | चंद्रदैवते | B. चंद्रदैवते |
| 133 | $1^{d}$ | कूब्जा - | कुब्जा - |
| 134 | $5^{a}$ | भागेन | भोगेन |
| 135 | $14^{b}$ | अङ्कधूर्य- | अङ्कुर्य- |
| | n. $12^{b}$ | धर्म्माभसाम् | B. धर्म्मा - |
| 137 | $20^{a}$ | उड्डीनास्ते | उड्डीनास्ते |
| | n. $24^{c}$ | अभव | B. अभव |
| | n. $24^{d}$ | अनंदरम् | B. अनंदरम् |
| 140 | $9^{c}$ | लीलापयः | लीलापयः- |
| 141 | n. $11^{d}$ | - वधूर्नन्दनो | B. - वधू - |
| 142 | n. $17^{c}$ | सलग्ने | B. सलग्ने |
| 143 | n. $24^{a}$ | अगूढमूढ | B. अगूढ - |
| | n. $25^{t}$ | हेमः प्रोज्वल - | B. हेमः प्रो - |
| 149 | $21^{d}$ | आलिङ्ग्य | आलिङ्ग्य |
| 153 | n. 40 | स्वान्त - | B. स्वान्त- |
| 156 | $56^{b}$ | केलिकला - | केलीकला - |
| 158 | $4^{d}$ | भूमिपतिः | भूमीपतिः |
| 161 | $17^{a}$ | व्यतिकरख्या - | व्यतिकरख्या - |
| 166 | l. 1 | नवमोऽ - | दशमोऽ - |
| | $46^{a}$ | सम्यक् शास्त्र | सम्यक्शास्त्र |